श्रीकुरुगंटि श्रीरामशास्त्रिविरचितं

# पञ्चलक्षणीसर्वस्वम्

सम्पादकः
**डॉ० विजय शर्मा**
एम०ए० (संस्कृत), आचार्य (नव्य-व्याकरण, मीमांसा), पी-एच० डी०
प्रवक्ता
श्री वेङ्कटेश पराङ्कुश संस्कृत महाविद्यालय
अस्सी, वाराणसी-५ (उ०प्र०)

प्रकाशक
**भारतीय विद्या संस्थान**
जगतगञ्ज, वाराणसी

प्रकाशक : **भारतीय विद्या संस्थान**
(प्रकाशक एवं पुस्तक विक्रेता)
सी. २७/५९ जगतगंज, वाराणसी-२२१००२ (उ. प्र.) भारत

ISBN : 81-87415-59-2
सन् : २००५
मूल्य : रु. १५०.००

अक्षर संयोजक :
**वेङ्कटेश कम्प्यूटर कॉम्प्लेक्स**
जानकीबाग कालोनी, लंका, वाराणसी-५
दूरभाष : ०५४२-२३६८६८७, ०-९४१५८२०४९३

# उपोद्घात:

आथर्वणं सुमनसां प्रवरं महान्तं, कौण्डिन्यवंशमनघं करुणालयन्तम् ।
राजेन्द्रदेशिकपदे विनिवेशयन्तं, श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ।।

इह खलु प्राणिनः प्रातिकूल्य (द्वेष्यभाव) भावनिवृत्यर्थम्, तथा आनुकूल्य-भाव (इच्छाविषयत्व) ग्रहणाऽर्थं सततमेवयतमानाः दृश्यन्ते, तेषु मानवाऽतिरिक्तजीवा मुख्यरूपेणस्वस्थितज्ञानमात्राऽऽश्रयेण हेयोपादेयवस्तुषु प्रवर्तन्ते, तत्तक्वचित्ते प्रत्यक्षाऽनुमानाऽऽश्रितप्रवर्तमानात् स्वाऽभीष्टमुपादेयं लभन्त अपि तत्तुभ्रमप्रमाऽधीनतया नहि नैयत्येनैवेच्छितवस्तुग्राहिणीप्रवृत्तिमन्मो भवन्ति, किन्तु घुणाऽक्षरन्यायेनैवतथास्यादपि । नहि तत्र शुद्धसतोगुणीयसाचिव्यं साहाय्यकरमनुभूयंते, नाऽपि च तेषां आप्तपुरुषीयतत्त्वाऽऽवेदकवाक्येनैव तादृशः सम्बन्धो भवितुमर्हति, येन तदीयप्रवृत्तिः सफलैव, तावताऽपितेहि स्वाऽभिलाषविषये सावधानमनसैवप्रवर्तन्ते, निवर्तन्ते च तथैव हानिप्रदद्वेषविषयात् ।

मानवस्तुप्रायेण व्यावहारिकभूमौहेयोपादेय वस्तुविषये अन्याऽपेक्षयाकात्स्र्नेन ज्ञानवन्तः, तदीयप्रवृत्तौ प्रत्यक्षादिस्वरूपप्रमाणद्वारैर्वस्तुविषयकं ज्ञानं विचारमीमांसयापरिशोधितमपि भवति, येन तत्पुरस्सरवमानवीयप्रवृत्तौ, ग्राह्याऽग्राह्यपदार्थेषु अन्याऽपेक्षयानिर्भ्रान्तताऽपिबाहुल्येनाऽवगम्यते ।

उपरितनविचारस्याऽयमाशयोयत् समेजीवाः जलप्रवाहवत् वतनैरन्तर्येणैव स्वाऽभीष्टप्रतिरोधकनिवारणे, तथेच्छितग्रहणीयाऽऽप्त्यर्थञ्च यतमाना अनुभूयन्ते । इष्टाऽऽप्त्यर्थाऽपि प्रवृत्तियदाऽनिष्टेनैवसम्बध्नाति कदाचित्, कदाचितच्च इष्टस्य साधकं (प्रापकम्) इदम्वेदमिति साधनविषये भवति सन्देहः, अन्यत्रक्वचित् साध्यसाधनविषये वैपरीत्यमितिरपि गोचरीभवति नह्येतावताऽपि विश्रान्तिः, किन्तु कुत्रचित्तु किं साध्यं (सुखस्वरूपम्) इत्यपि न जानन्ति, तथा जानन्तोऽपि किमस्य साधनमत्तैव मोमुह्यमानाऽपि यत्नाऽऽश्रयाः ।

इहेदं तत्त्वन्तुनिर्णीतमेव यत् यद् विषयिणीप्रवृत्तिः स्यात् तद् विषयिण्येवेच्छाज्ञानञ्चाऽपेक्षित भवति । अत एव लोकविदितस्यन्यायशास्त्रे तथा वचनं विमतिपथाऽनारूढमेव विराजते यत् "प्रथमं जानाति, तत इच्छति ततो यतत्" इति । अतः प्रवृत्तिनिवृत्तिकारणीभूतम् इष्टाऽनिष्ट (सुख दुःख साधन) विषयकज्ञानमेवाऽऽदौतावदारवश्यकं भवति प्रवृत्यादिमताम् । अत्र विषये सर्वेषां तत्त्वविवेच-

प्रकाशक : **भारतीय विद्या संस्थान**
(प्रकाशक एवं पुस्तक विक्रेता)
सी. २७/५९ जगतगंज, वाराणसी-२२१००२ (उ. प्र.) भारत

ISBN : 81-87415-59-2
सन् : २००५
मूल्य : रु. १५०.००

अक्षर संयोजक :
**वेङ्कटेश कम्प्यूटर कॉम्प्लेक्स**
जानकीबाग कालोनी, लंका, वाराणसी-५
दूरभाष : ०५४२-२३६८६८७, ०-९४१५८२०४९३

# उपोद्घात:

आथर्वणं सुमनसां प्रवरं महान्तं, कौण्डिन्यवंशमनघं करुणालयन्तम् ।
राजेन्द्रदेशिकपदे विनिवेशयन्तं, श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ।।

इह खलु प्राणिन: प्रातिकूल्य (द्वेष्यभाव) भावनिवृत्यर्थम्, तथा आनुकूल्य-भाव (इच्छाविषयत्व) ग्रहणाऽर्थं सततमेवयतमाना: दृश्यन्ते, तेषु मानवाऽति-रिक्तजीवा मुख्यरूपेणस्वस्थितज्ञानमात्राऽऽश्रयेण हेयोपादेयवस्तुषु प्रवर्तन्ते, तत्त-त्क्वचित्ते प्रत्यक्षाऽनुमानाऽऽश्रितप्रवर्तमानात् स्वाऽभीष्टमुपादेयं लभन्त अपि तत्तु-भ्रमप्रमाऽधीनतया नहि नैयत्येनैवेच्छितवस्तुग्राहिणीप्रवृत्तिमन्मो भवन्ति, किन्तु घुणाऽक्षरन्यायेनैवतथास्यादपि । नहि तत्र शुद्धसतोगुणीयसाचिव्यं साहाय्यकरमनु-भूयते, नाऽपि च तेषां आप्तपुरुषीयतत्त्वाऽऽवेदकवाक्येनैव तादृश: सम्बन्धो भवि-तुमर्हति, येन तदीयप्रवृत्ति: सफलैव, तावताऽपितेहि स्वाऽभिलाषविषये सावधान-मनसैवप्रवर्तन्ते, निवर्तन्ते च तथैव हानिप्रदद्वेषविषयात् ।

मानवस्तुप्रायेण व्यावहारिकभूमौहेयोपादेय वस्तुविषये अन्याऽपेक्षयाकात्स्न्येंन ज्ञानवन्त:, तदीयप्रवृत्तौ प्रत्यक्षादिस्वरूपप्रमाणद्वारैर्वस्तुविषयकं ज्ञानं विचारमीमां-सयापरिशोधितमपि भवति, येन तत्पुरस्सरवमानवीयप्रवृत्तौ, ग्राह्याऽग्राह्यपदार्थेषु अन्याऽपेक्षयानिर्भ्रान्तताऽपिबाहुल्येनाऽवगम्यते ।

उपरितनविचारस्याऽयमाशयोयत् समेजीवा: जलप्रवाहवत् वतनैरन्तर्येणैव स्वाऽभीष्टप्रतिरोधकनिवारणे, तथेच्छितग्रहणीयाऽऽप्त्यर्थञ्च यतमाना अनुभूयन्ते । इष्टाऽऽप्त्यर्थाऽपि प्रवृत्तियदाऽनिष्टेनैवसम्बध्नाति कदाचित्, कदाचितच्च इष्टस्य साधकं (प्रापकम्) इदम्वेदमिति साधनविषये भवति सन्देह:, अन्यत्रक्वचित् साध्यसाधनविषये वैपरीत्यमितिरपि गोचरीभवति नह्येतावताऽपि विश्रान्ति:, किन्तु कुत्रचित्तु किं साध्यं (सुखस्वरूपम्) इत्यपि न जानन्ति, तथा जानन्तोऽपि किमस्य साधनमत्तैव मोमुह्यमानाऽपि यत्नाऽऽश्रया: ।

इहेदं तत्त्वन्तुनिर्णीतमेव यत् यद् विषयिणीप्रवृत्ति: स्यात् तद् विषयिण्ये-वेच्छाज्ञानञ्चाऽपेक्षित भवति । अत एव लोकविदितस्यन्यायशास्त्रे तथा वचनं विमतिपथाऽनारूढमेव विराजते यत् "प्रथमं जानाति, तत इच्छति ततो यतत्" इति । अत: प्रवृत्तिनिवृत्तिकारणीभूतम् इष्टाऽनिष्ट (सुख दु:ख साधन) विषयकज्ञान-मेवाऽऽदौतावदारवश्यकं भवति प्रवृत्यादिमताम् । अत्र विषये सर्वेषां तत्त्वविवेच-

नतत्पराणां नाऽस्तिकाऽऽस्तिकदर्शनाऽऽदिशास्त्राणां नाऽनेकमतिः।

अत्र एवोदयनाऽऽचार्येणोक्तमिदं संगच्छते—

"इव खलु निसर्गप्रतिकूल स्वभावं सर्वजनसम्वेदनसिद्धं दुःखं जिहासवः सर्वएव तद्धानोपायमविद्वांसोऽनुसरन्तश्च सर्वाऽध्यात्मविदेकवाक्यतया तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति, न ततोऽन्यम्। प्रतियोग्यनुयोगितया च आत्मैव तत्त्वतो ज्ञेयः। तथाहि— यदि नैरात्म्यम्, यदिवाऽऽत्माऽस्ति वस्तुभूतः, उभयथाऽपि नैसर्गिकमात्मज्ञानमतत्त्वज्ञानमेव इत्यत्राऽप्येकवाक्यतैव वादिनामतः आत्मतत्त्वं विविच्यते। (आत्मतत्त्वविवेकस्याऽऽरम्भे) एतदीय ग्रन्थेनेहेदज्ञायते यत् परमप्रयोजनीयभूत स्वात्मविज्ञानजन्यसकलप्रातिकूल्यसम्पदकाऽविवेकजदुःख विध्वंसनम्, तद्धि आत्मविषयकाऽपरोक्षभूतविवेकात् सम्भवति। जडविविक्त स्याऽऽत्मनोज्ञानंहि विवेकः तस्याऽनुभवः केन साधनेन स्यात् तदर्थमात्मभेदप्रतियोगिस्वरूपजड-पदार्थस्याऽपितात्त्विकज्ञानं स्यादेवाऽपेक्षितम्, अभावज्ञाने प्रतियोगिज्ञानस्यकारण-त्वात्, अपि च आत्मेतरपृथिव्यादि पदार्थानां बाहुल्यात् सर्वप्रतियोगिको भेदः आत्मविवेकसम्पत्यर्थमावश्यकमिति अतः जडतत्त्वानामपिपारस्परिकोभेदः आव-श्यकः, तथाविधभेदेन प्रमाणमात्रेणसम्भवति, यतः प्रमाणेन पदार्थविज्ञानमेवस्यात् नहि प्रमाणमात्रेण सजातीयात्, विजातीयाच्चभिन्नतया क्रस्याऽपि पदार्थस्यभेदेन ग्रहसम्पद्यते, अतोविचारितमिदं भवति यत् वस्तुविवेकार्थं प्रमाणपुरस्सरमन्यद-पिकिञ्चिद् भेदकसाधनमपेक्षितं भवति, तच्च साधनं तत्तद् वस्तुगतविशेषचिह्नमेव, यद्धिलक्षणाऽपरपर्यायतयागीयते। एते नेदं ज्ञातं भवति यत् असंभावनायाः तथा-विपरीतभावनायानिवर्तकतातु प्रमाणेषु विद्यते, किन्तु वस्तुषुवैलक्षण्य सम्पादक-त्वन्तु लक्षणस्यैव। अतएव माधवोक्तमपि वचनसंगच्छते। तथाहि—

"लक्षणप्रमाणाभ्यां हि वस्तु सिद्धिः।"

अतएवाऽऽहुः— "मानाऽधीनामेयसिद्धिर्मानसिद्धिश्च लक्षणात्"। इति।

(सजातीयविजातीयव्यावर्तकोलक्ष्यगतः कश्चिल्लोकप्रसिद्ध आकारोलक्षणम्। तेन च लक्षणेन लक्ष्येवस्तुनि सम्भावनाबुद्धौ जातायां प्रमातुमुद्युक्तः प्रमाणेन तद-वगच्छति ) इह यद्यपि लक्षणस्य पूर्वप्रयोगः, तथाऽपि परतयैववतस्योप्रयोगः साधु-रितिमन्तव्यः।

प्रायेणाऽऽस्तिकानास्तिकाश्च पदार्थपरिज्ञानार्थं लक्षणप्रमाणाऽऽश्रयणं कुर्वन्तः स्वस्वशास्त्रेषु दरीदृश्यन्ते, पदार्थ लक्षणाऽऽदिकञ्च तत्तच्छास्त्रप्रणेतृणा स्वस्वगुरुपरम्पराप्राप्त ज्ञानजन्य संस्काराऽनुसारेणैव, अतएव पदार्थस्य लक्षणस्य च तत्तच्छास्त्रेषु विभिन्नता। तेषु कानिचित् लक्षणाऽऽदिविचार शास्त्राणि त्वनादि-

भूतवेदमूलकानि यानि हि वेदार्थस्यैव दार्ढ्यप्रवृत्तानि गौतमन्यादिरूपाणि शास्त्राणितत्कोटौप्रविष्टानि, अन्यानि यानिजैनवौद्धचार्वाकप्रोक्तानिशास्त्राणि यत्र महावीराऽऽदि तीर्थङ्करवचनाऽनुसारेण, सुतग(बुद्ध) वचनाऽनुगुणञ्च पदार्थानां स्वरूपनिर्धारणपुरस्सरं तदीयलक्षणानि प्रवृत्तानि, बुद्धाऽऽदिवचनानां सादितया तत्प्रोक्ताऽऽगमस्य आगमाऽऽभास प्रकाशनार्थं, तथा स्वकीयवेदाऽनुमोदितन्यायादि शास्त्रप्रतिपादिताऽऽत्माऽनात्मपदार्थसिध्यर्थञ्च तदनुगुणं सार्थकं प्रयत्नं दृश्यते। यद्यपि न न्यायवैशेषिकशास्त्राणामेव विलक्षणाऽर्थप्रतिपादकत्वम्, किन्तु वैदिकमतान्तर्गतेष्वपि मीमांसासांख्ययोगप्रभृतिषु स्थूलपदार्थमारभ्य सूक्ष्माऽतिसूक्ष्मभूतानामात्माऽऽदिपर्यन्तानामपि विवेचकत्वमुपलभ्यते नैतावताकस्याऽपि न्यायादिशास्त्रविशेषस्य पदार्थप्रतिपादने गौणत्वं मुख्यत्वं सिध्यति, नाऽपि शास्त्रोद्देश्यभादायैव गौणप्रधानभावस्य निर्णीतिः यातोहि सर्वाणि शास्त्राणि कैवल्यपथप्रदर्शनेवद्धपरिकराणि, तथाहि— अथातोधर्मंव्याख्यामः (१) यतोऽभ्युदयनिश्रेयसिद्धिः सः धर्मः (वै० द०१।१।२) एवमेव न्यायशास्त्रे प्रमाणप्रमेयः ....तत्त्वज्ञानान्निः श्रेयसाऽधिगमः— (गो० न्या० १।१।१)

'अथत्रिविधदुःखाऽत्यन्तनिवृत्तिरत्यन्तपुरुषाऽर्थः (सां० सू० १) अभ्युदयकरः सत्त्वप्राधान्यात् (क०मी०घ०पा० ३) निःश्रेयस्करः शक्तिमत्त्वात् (कर्म मी० घ० पा० ४) 'अथातोधर्मजिज्ञासा (मी० १।१।१) तथा 'अथातोब्रह्मजिज्ञासा (ब्र०सू० १।१) इत्यादिषु सर्वत्रैव तत्त्वप्रकाशकत्वं तथा तत्साध्यभूत कैवल्याऽऽदि प्रयोजनप्रकाशकत्त्वञ्च समानरूपेणोपलभते, तथाऽपि यतः प्रमाण द्वारैव साधनाऽऽत्मक प्रमेयस्य, साध्याऽऽत्मकप्रमेयस्य च सिद्धिः, तेनसिध्यतीदं यत् प्रमाणस्यप्राधान्यमेव। प्रमाण पदं न्यायशास्त्रे लक्षणाऽर्थबोधकमप्युपलक्षणतया भवति, अत्रापि नास्ति वैमत्यम्। यतोलक्षणस्याऽपि इतरभेदाऽनुमितौहेतुतयातस्याऽनुमानप्रमाण कोटौसमावेशे काचिदनुपपत्तिः।

अतः प्रमाण प्रमेयपदार्थस्य इतर पदार्थाऽपेक्षया प्राधान्यमापतति, प्रमाणप्रमेयमध्येऽपि प्रमाणस्यैव श्रेष्ठत्वं "मानाऽधीनामेयसिद्धिर्मानसिद्धिश्च लक्षणात्" नैयायिक सरण्या तु प्रमाणमेवसर्वोत्तमत्वयतः। अतः नव्यन्यायाऽनुयायिनः खलु गोतमप्रणीत प्रमाणप्रमेय संशयप्रयोजनाऽऽदिप्रतिपादक सूत्रेपठित प्रमाणपदाऽर्थ विवेचनाऽर्थमेवप्रवृत्ताः, यतः तेनैव प्रमेय पदार्थस्य तत्त्वं निर्णीतो भवति, प्रमाणमपि लक्षणान्वित एव पदार्थविवेकजननेकारणभाग् भवति।

ननु च— **प्रसिद्धानिप्रमाणानि, व्यहारश्च तत् कृतः।**

**प्रमाणलक्षणस्योक्तौ, ज्ञायतेन प्रयोजनम्।।** (न्याय०२)

इत्यनेन ज्ञायतेयत् प्रत्यक्षादीनिप्रमाणानिलोकतः सिद्धानि सन्ति, प्रमाण-द्वारैवव्यवहारस्याऽपिनिर्वाहः, लोकविदित चिन्हाऽऽत्मक लक्षणेन च विशेषपदार्थाऽवगतिरपि शास्त्रविनैव सुलभेति कथं लक्षणप्रमाणप्रतिपादकस्य शास्त्रस्य सार्थक-तेतिचेन्न, यद्यपि लक्षणप्रमाणादीनां बोधः शास्त्रनिरपेक्षलोकादेव, तथाऽपि लोके अनेकविधपदार्थविषये ज्ञानस्यप्रचारात् लौकिकव्यवहारादिना लक्ष्येषु लक्षण-विषयसन्देहो जागार्ति, तत्र शास्त्रेण सन्देहो अपोद्यते।

तथाहि— यथा बहुष्वपिगोषुविद्यमानासु शास्त्रसहकृताऽसाधारण धर्मदर्शने-नाऽऽत्मीयां गां निश्चितनोतिलक्षणतत्त्वज्ञः शास्त्रबोधिताऽसंदिग्धलक्षणविहीनस्तु-तत्ताऽपि सन्दिह्यत एव। एवं रीत्या सर्वत्रैव स्थावरजङ्गमरलाऽऽदिविशेषेष्वपि शास्त्राऽन्वितेनलौकिकप्रमाणावेद्य चिह्वाऽऽदिविषयकाऽसंदिग्धज्ञानेन निर्णयज्ञेयो भवति।

**शंका**— यदि च लक्षणप्रमाणाभ्यामेववस्तुविषयकविवेकः संभवति चेत्तर्हि लक्षणस्य लक्षणाऽभावात् कथं विवेकग्रहस्तस्येति ? यदि च तस्याऽपि लक्षणा-न्तरेणविवेकस्तर्हि तस्याऽपि पुनर्भक्षणेनैवतत्त्वविवेक इति लक्षणधाराया अविरति वशादनवस्थादोत्पत्तिस्तत्रस्यादिति ।

**समाधान्**— न, यत्र खलु सन्देहस्तत्रैव सन्देहनिवर्तनूर्थलक्षणस्याऽवत-रणमुचितम्, यतो सन्देहहविषये एव लक्षण करिणाऽऽत्मकनियमस्य स्वीकारः, अतोयत्रैव पदार्थे सन्देहस्तत्रैव लक्षणविधानपूर्वकोनिश्चय इत्याकारकनियमोऽभ्यु-पगम्यते। यस्मात् लोकेसर्वत्रैव सन्देह एव इति नाऽनुभूयते, नहि कोऽपि स्था-ण्वादिष्विव वक्रोकोटरादि विषयेऽपिसंदिग्धो भवति, अर्थात् तत्र स्थाणुत्व-विषयेसन्देहोनैवाऽस्तीति लौकिकाऽनुभवः।

**सन्देहः**— ननु च कस्माद्धेतोः धर्मिभूत स्थाण्वादावेव सन्देहस्य प्रसारः न वक्रकोटरादावपि इति चेत् ?

**समाधान**— तत्रत्य समाधानं कदाचिदिमेव भवेत् यत् वक्रकोटरादिपरम्परायां सन्देहवारणस्य अनुपलब्धेः धर्मिषु स्थाण्वादिषु सन्देहस्य जायमान तया तत्र सन्देहकारणविललक्षणस्य विद्यमानत्वमिति समाधान यद्यपि स्यात् तथाऽपि प्रश्न-स्याऽविरतिर्नस्यात्, यत् स्थाण्वादिषु सन्देहस्य किम् कारणमस्तीति वक्तव्यम्, किञ्च वक्रकोटरादौ सन्देहनिवर्तकः को धर्मोविद्यतेऽत्र ?

**पूर्णसमाधानम्**— वस्तुनः स्वभाव एवोभयत्तेति वाच्यम्, येन क्वचित् सन्देह-स्याऽवतरणं भवति क्वचिच्च नतथेति।

किञ्च लक्षणविषये सन्देहस्य प्रसक्तिरेवन स्यात्, घटाऽऽदिपदार्थप्रकाशप्रदीप-

वत्, प्रदीपःखलुहि स्वसमीपवर्तिस्थितान् घटपटादीन् प्रकाश्य स्वस्वरूपमपि स्वेनैवप्रकाशयति नहि तत्र प्रकाशाऽन्तराऽपेक्षा भवतीति सर्वैरनुभूयते। यथा च– ''स्वाध्यायोऽध्येतव्यः'' इत्यने मन्त्र ब्राह्मणाऽऽत्मकसकलवेदस्य अध्ययन कर्मतां बोधयत् स्वस्वरूपस्याऽपि अध्ययनकर्मत्त्वं तेनैवबोधितं भवति, अन्यथा तादृशवेदवाक्य अध्ययनकर्मबोधकवाक्याऽन्तराऽभावेनाऽनध्ययनत्वप्रसंगात्। इत्थमिदं सिध्यति हि सर्वत्र सन्देहस्थले लक्षणस्य निश्चायकतया न शास्त्रकारेण लक्षणकरणस्य निष्प्रयोजनत्वमिति।

सन्देहः–– यदि च सर्वत्र लक्ष्ये लक्षणस्य निश्चयकारणत्वेसति प्रत्यक्षाऽऽदिप्रमाणस्य तदऽऽनर्थक्य प्रसङ्गः स्यादिति चेन्न,

समाधानम्– यथा प्रत्यक्षादिप्रमाणेन लोकव्यवहारप्रसिद्ध वस्तुनोनिर्णयो भवति, तद्वदेव लक्षणमपि वस्तुविषयकनिर्णयजनकत्वात् प्रमाणतां प्राप्नोति।

शंका–– यदि च लक्षणमपि वस्तुनिश्चायकस्तर्हि तत्रप्रमाणत्वप्रसारोभवतीनिर्गलिताऽर्थः फलति, किन्तु तावताऽपि तत् किं समाप्रमाण पर्यायः स्यात्, अथवा प्रत्यक्षादिरूपचतुर्विधप्रमाणविशेषेष्वन्तर्भवेत् ? चतुर्विधक्लृप्तप्रमाणाऽतिरिक्तरूपतया तस्याऽवस्थितिर्वा भवोदिति जिज्ञासा जायते।

समाधान्–– इह वाचस्पतिप्रभृतय एवं समादधति––

''लक्षणं नामव्यतिरेकिहेतुवचनम्, तद्धिसमानाऽसमानजातीयेभ्यो विभिद्य लक्ष्यं व्यवस्थापयति'' (ता० टी० पृ० ९८)

एतेन अनुमानप्रमाणस्य केवलव्यतिरेकिहेतौतस्याऽन्तर्भाव इति ज्ञातो भवति।

न्यायभूषणकारास्तु 'विशेषाऽकाऽऽदिशाद्वाः खलु लक्षणपर्यातयाप्रथिताः, अतो न प्रमाणपर्यायः, प्रमासाधनस्य सर्वस्याऽपि प्रमाणत्वात्, अर्थात् प्रमासाधनत्वत्वमात्रस्यप्रमाणत्वसप्रयोजनकत्वेतु प्रमाविषयास्याऽपि प्रमाणंत्व प्रसक्ति स्यादतः तल्लक्षणप्रमेयविशेषमेवमन्तव्यम्, तादृशलक्षणेप्रत्यक्षाऽऽदि स्वरूपव्यवहारेकारणन्तु प्रत्याक्षदिप्रमाजनने तस्य इन्द्रियादिसहकारित्वेन बोध्यम्, न तत्रेदृशीशंकाविधेयायस्मादिदं प्रमेयान्तर्गतं तस्मा हेतोः पुनरस्य गौतमसूत्रे 'तत्त्वज्ञानान्निः श्रेयाऽधिगमः' इत्यत्र तत्त्वाऽपरपर्यायतयापृथगुल्लेखो न कर्तव्यः इति। यतोहि लक्षणस्योल्लेखोऽवयवाऽऽदितुल्य एव प्रयोजनवशात् कृतोऽस्ति नाऽतोभ्रमः। तस्मात् सिद्धमिदं यत् शास्त्रं विनाऽपि लक्षणस्य लोकविदितत्वेन, यथा शास्त्रासऽनाभिज्ञाः प्रमाण्यऽऽदि व्यवहारं कुर्वन्ति तेन लक्षणाऽभिधायकाशास्त्र स्यनैरर्थ्यक्यं न स्यात्, यतः भ्रान्तिनिवर्तकतया शास्त्रस्योपयोगः।

**अत्रत्योऽयमाशयः**— बौद्ध जैनदर्शनाऽन्तराऽभिनिविष्टचित्तैः खलु भ्रान्तपुरुषैः भिन्नभिन्नलक्षणाऽभिधानेन लोकविदितेष्वपिप्रमाणाऽऽदिषु विसंवाद्यते, यदर्थं लोकव्यवहारसिद्धमेव लक्षणप्रमाणादिकमनुद्यतत्त्वविधानां भ्रान्तानां भ्रमोऽपोद्यते, यथा पितृप्रत्यक्षेऽपि सादृश्यमूलकभ्रमाऽधीनजिज्ञासोः पितृशरीरगताविद्यमानचिह्नाऽनुवादेन भ्रमोनिवर्त्यते, तथैव लोकप्रसिद्ध लक्ष्यगतचिन्हविशेषेण अनुवादितलक्षण स्वरूपेण लक्ष्यस्याऽपि सार्वत्रिकस्य भ्रमोनिवर्तेत। तथाहि— प्रत्यक्षाऽऽदिलक्षणमनूद्य यत्राऽत्मादिविषयकेषु सम्यक् प्रमाणेषु भ्रान्ताः सन्तः प्रमाणाऽऽभासतामनर्थाऽन्तरेष्वप्यर्थाऽऽपत्त्यादिष्वर्थान्तरतां च प्रतिपद्यन्ते, तत्र प्रमाणलक्षणविधीयते– यतूसम्यगनुभवसाधनं तत्प्रमाणम् एवमेव प्रत्यक्षाऽऽदि प्रमाणे लक्षणमनुद्यप्रमाणाता शास्त्रेणविधीयते। अपि च यत्र प्रमाणाऽऽभासेष्वप्यद्वैतक्षणिकत्ववेदाऽनित्यत्वाऽऽत्पाद्यसत्वाऽऽदिविषयेषु प्रत्यक्षाऽऽदिप्रामाण्यमर्थान्तरेष्वप्यनर्थाऽन्तरतां च प्रतिपद्यन्ते, तत्र यन्नसम्यग् ज्ञान साधनं तन्न प्रत्यक्षाऽऽदिप्रमाणम् इत्येवं प्रतिषिध्यते इत्येवं प्रकारेण आत्माऽऽदि लक्षणेष्वपि चाऽनुवादप्रयोजनं ज्ञेयम्। एतेनाऽऽत्मादिज्ञानमुपायत्वेन, निःश्रेयसंचोपेयत्वेनोपनिषत्वस्वन्येषु च योगशास्त्रेषु-प्रसिद्धमतोऽनर्थकं तद्विधायकमतच्छामित्येतदपि परिहृतम्, नह्यात्माऽऽदिविज्ञान न्यायशास्त्रेविधीयते नाऽपि निःश्रेयसं विधीयते। किं तर्हि शास्त्रेणक्रियते? प्रसिद्धमेव तत् तत् सर्वमनूद्य जैनबौद्धाऽऽदिदर्शनाऽध्यनेनाऽपहृतचित्तवतां कृते ह्यात्मादिज्ञानं मिथ्ययात्वेन संसारकारणं सात्मकं निःश्रेयसमविद्यमानं च प्रतिपद्यमानानां भ्रमनिवारणाऽर्थमात्मादिसमर्थनद्वारेणाऽशेषप्रतिपक्षप्रतिषेधेन च प्रमाणोपपन्नत्वमात्मज्ञानाऽऽदेः सम्यगतयाविधीयते, येनोपनिषदाभिहितमेव सर्वं तथ्यमेवेतिनिश्चित्यनिराशंकस्यप्रेक्षावतः तत्प्रसिद्धमेवोपायमनुतिष्ठतोऽपवर्गप्राप्तिर्भवतीति॥ यद्यपि प्राचीन न्यायवैशेषिकग्रन्थेषु प्रमाण प्रमेयविचारो लक्षणाश्रितमेव तथाऽपि नव्यन्याये प्रमाणप्रमेययोर्मध्येप्राधान्यात् प्रमाणविचार एव कृतोवर्तते सोऽपि लक्षणप्रकाशनपुरस्सरस्तस्तमादत्र नव्यन्यायस्यश्रेष्ठत्वं प्रतिभाति।

## न्यायपदार्थप्रदर्शनम्

न्यायोनावस्ततत्त्वस्थनिर्णयार्थं प्रमाणानामुपयोगः, उक्तञ्चन्यायभाष्यकारेण—

"प्रमाणैर्थपरीक्षणं न्यायः"

अर्थात् प्रत्यक्षादिभूतैः सर्वप्रमाणैर्थस्य परीक्षा करणं न्यायः तादृशवाक्यसमूहोऽपि न्यायशब्देन उच्यते यश्चाऽन्यव्यक्तिमुद्दिश्याऽनुमनद्वारा कस्यचित् पदाऽर्थस्यबोधसम्पादनाऽर्थं प्रयुज्यते, भाष्यकारस्तुतादृशं वाक्यं परमन्यायसंज्ञया अभिदधाति। किञ्च वादजल्पवितण्डाऽऽत्मकानां विचाराणां मूलं, तथा तत्त्वनिर्णय-

जनकत्वमपि तस्याऽवोधयत्। तथाहि— "साधनीयाऽर्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चाऽवयवाः प्रतिज्ञाऽऽदयः समूहपेक्षयाऽवयवा उच्यन्ते, तेषु प्रमाण समवायः, आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनयनमुपमानम्, सर्वेषामेकाऽर्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति सोऽयं परमो-न्याय इति, एतेन वादजल्पवितण्डाः प्रवर्तन्ते, नातोऽन्यथेति, तदाऽऽश्रया च तत्त्वव्यवस्था" (न्या० भा० सू०- १)।

गौतमन्यायस्य शाखाद्वयप्रतिपादनपुरस्सरं नव्य न्यायशास्त्रस्थवैलक्षण्ये-याथार्थ्य प्रतिपादनम्—न्यायशास्त्रीय समस्तवाङ्मयस्य शाखाद्वयं हि प्रमाणप्राधान्य प्रमेयप्राधान्य कृतवैलक्षण्यवशाज्जातमिति पूर्वमेवोक्तम् महर्षिगौतमादारभ्य गंगेशात् प्राक्कालिकाः खलु ये न्यायशास्त्रकारास्तेषां ग्रन्थाः प्रमेयप्रधानाः प्राचीन-न्यायशास्त्रनाम्ना प्रसिद्धिं जगुः, गंगेशोपाध्यायकृतस्य तत्त्वचिन्तामणि ग्रन्थस्य, तथा तत्सम्बन्धिव्याख्यानाऽऽत्मक ग्रन्थस्य च प्रमाणप्रधानत्वम्, तथा भूतस्य नव्यन्यायसंज्ञया प्रसिद्धिरभूत्।

प्राचीननव्यन्याययोर्मध्येविशेषतेयं यत् प्राचीनन्यायेविषयाणां प्रतिपादनं यत्र स्थूलरीत्या भवति, अतएव तत्तस्य विचारोऽपि नाऽति सूक्ष्मः, येन तच्छास्त्रं प्रतिपाद्यविषयस्य वहिरङ्गकलेवरमेव स्पृष्ट्वानिवर्तते, किन्तु नव्यन्याये प्रतिपादित-विषयाणां विचारः सूक्ष्मरीत्या सम्पादितो भवति, तेन च तत्रत्यविचारः सर्वाङ्ग-संस्पर्श्य, अन्तःस्थलप्रविश्य तथाविधं पदार्थतात्त्विकदृष्ट्या प्रकाशकरनेचातीव कुशल इति। अपि च स्वविषयं निष्पक्षतयाविचारणे तदीयतत्त्वातत्त्वयोर्विवेको-ऽध्येतृवर्गस्यसम्मुखे सुस्पष्टरूपेणअवतरति।

### प्रमाणनिर्वचनम्

प्रमाकरणं प्रमाणम्, प्रमा च यथाऽर्थाऽनुभवरूपा। अर्थात् यश्चपदार्थो यादृश-स्तस्य तेन-तेनरूपेण तत्तद् वस्तूनामनुभवः ( अर्थतुल्याऽनुभवः ) प्रमोच्येते।

### प्रमाणभेदः

न्यायशास्त्राऽनुसारेण प्रत्यक्षाऽनुमानोपमानशब्दभेदेन प्रमाणस्यचातुर्विध्यं सिध्यति, मीमांसावेदान्ताऽऽदिशास्त्रेषु ह्यर्थाऽऽपत्यनुपलब्धिसम्भवचेष्टेतिह्यानां प्रामाणानामाधिक्येऽपि, न्यायदर्शनेनतेषां स्वातन्त्र्येणप्रमाणत्वमस्ति, किन्त्वाद्यत्रया-णामनुमानप्रमाणे, चरमयोर्द्वयोः शब्दप्रमाणेचाऽन्तर्भावः।

### प्रत्यक्षप्रमाणम्

"विषयं प्रतिगतम् अक्षम् = इन्द्रियमिप्रत्यक्षम्" प्रत्यक्ष शब्दस्यैतादृशव्युत्पत्त्यनुसारेण विषयसन्निकृष्टेन्द्रियमेवप्रत्यक्षप्रमाणपदवाच्यमिति। प्रमाणभूतानीन्द्रि-

याणि खलु– घ्राणरसनचक्षुस्त्वक्श्रोत्राणिमनश्च। तद्विषयाश्च क्रमेणगन्धरसरूप-स्पर्शशब्द सुखदुःखादश्च पृथिव्यादयः तदाऽऽधाराश्चविषय स्वरूपाः।

**प्रत्यक्षप्रमास्वरूपम्**

प्रत्यक्षप्रमाण्यनां षड्विधित्वेनतज्जन्यप्रमाया अविषाड्विध्यम्। किञ्च प्रति-प्रत्यक्षं सविकल्पकनिर्विकल्पक भेदभिन्नमपि। तत्र सविकल्पक स्थले यत्र विशेष्य-विशेषण सम्बन्धानां सम्प्रत्ययो भवति, तत्रैव निर्विकल्पकज्ञाने विशेष्यविशेषणयोः तत् सम्बन्धस्य च प्रतिपत्ति नैवतेनरूपेण, अर्थात् तेषां विषयाणां निर्विकल्पकज्ञाने यत् किञ्चिदिदमित्येवं रूपेणैव भवति।

**निर्विकल्पकभेदः**

शुद्धमिश्र भेदेनतस्य द्वयेविध्यम्, पूर्णरूपेणसर्वथानिष्प्रकारकमेवतच्छुद्धनिर्वि-कल्पाऽऽख्यम्। यच्चांऽशेनसप्रकारकं तथाऽन्यांऽशेन सप्रकारकमपि भवेत् तन्मिश्र-पदवाच्यम् यथा 'घटज्ञाने' इत्यत्रज्ञानत्वं ज्ञानञ्च स्वरूप भूतमेवसत भासते किन्तु घटांशे घटघटत्वसमवायानां विशेष्यविशेषणसंसर्गविधाया एवमानं भवति अतो 'घटज्ञाने' मिश्रनिर्विकल्पकस्थितिः।

लौकिकाऽलौकिकभेदेने सविकल्पकस्य द्विविधभेदोऽस्ति इन्द्रियस्यलौकिक सन्निकर्ष साहाय्येनोत्पद्यमानं लौकिकम्, तथा अलौकिक सन्निकर्षेण सह इन्द्रियस्य ज्ञान यदोत्पद्यतेतदलौकिकशब्दग्राह्यं भवेदिति।

**अनुमानम्**

अनुमितिकरणमनुमानम्, परामर्शजन्य ज्ञानञ्चाऽनुमिति शब्दाऽभिधेयो भवति। व्यापारवदसाधारणकारणं करणम्, असाधारणयञ्च— कार्यत्वाऽनवच्छिन्ना, कार्यत्व-व्याज्य धर्माऽवच्छिन्नयाकार्यता, तादृश कार्यतानिरूपितकारणतावत्त्वम्।

**अनुमानभेदः**

न्यायसूत्राऽनुसारेण– पूर्ववत्, शेषवत् तथा सामान्यतोदृष्टभेदेनं अनुमानः त्रिविधः तत्र कारणेन कार्यस्याऽनुमानं पूर्ववत् शब्दवाच्यः।

कार्येणकारणाऽनुमानं शेषवच्छब्दाऽर्थः। तथा कार्यकारणभावसम्बन्धविरहे-ऽपि सहचरितेनैकेनपदार्थेन अपरस्य सहचरितस्याऽनुमानं सामान्तोदृष्टशब्देन व्यव-ह्रियते। इत्थमेवाऽन्यविधमपि तदीयस्वरूपं प्रयोजनप्रयुक्तं शास्त्रकारेण व्याख्यायते यद्भिनेह प्रतन्यते। प्रत्येकाऽनुमानस्ययैविध्यप्रदर्शनम् पूर्वोक्तं प्रत्यनुमानं केवला-ऽन्वियकेवलव्यतिरेक्यन्वयव्यतिरेकि भेदात् त्रिविधस्वरूपं लभते।

**अथप्रकारान्तरेण अनुमानभेदकथनम्**

उपयुक्तानां सर्वेषामनुमानानां पुनः स्वार्थाऽनुमानपरार्थाऽनुमानभेदेन प्रधान-तयाद्वैविध्यं सिध्यति।

## स्वार्थाऽनुमानम्

तदेव स्वार्थाऽनुमानशब्देन व्यवहारभाग्भवति, येन अनुमाता स्वगताऽनुमितेलाभकारी भवति। यथा कोऽपिपुरुषमहानसादिस्थलेषु धूमवह्न्योः साहचर्यंगृहित्वा कस्मिंश्चित्कालेवनं प्राप्तः तत्र प्रयोजनवशाच्चवह्न्यनुसन्धाने लग्नः सन् तत्र क्वचिच्छिरवरे अविच्छिन्नमूलां धूमरेखां पश्यति तदा ज्ञातपौर्वकालिक वह्निविरूपितधूमवृति व्याप्तेः स्मरणं जायते, 'धूमोवह्निव्याप्यः' इत्याकारकम्, तेन च पर्वतस्थाऽग्निनिरूपित व्याप्यतायाः परिज्ञानेन 'वह्निमान् पर्वतः' इत्येवं रूपाऽनुमितिस्तस्यसिद्धयति, एतदर्थं स्वार्थाऽनुमानस्यस्वीकारआवश्यकेति।

## परार्थाऽनुमानम्

यदा कोऽपिजनः स्वयमेवधूमादग्निमनुमाय पश्चात् परं प्रतिबोधयितुमिच्छया यत् पञ्चाऽवयवाऽऽत्मकं वाक्यं न्यायाऽपरपर्यायं प्रयुज्यते तदातेन वाक्येनभिन्नपुरुषस्य यदनुमानं भवति तदेव पराऽर्थाऽनुमानम्। पञ्चाऽवयववाक्यन्तु प्रतिज्ञाहेतूदाहरणनिगमनोपनयरूपम्। परार्थाऽनुमानं यैःपञ्चवाक्यैः सम्पन्नोभवति तत्समूहोन्यायशब्द वाच्यः। तेषुप्रथमवाक्यस्य 'प्रतिज्ञा' संज्ञा, अनेन हि पक्षे साध्यसम्बन्धस्य परिग्रहोभक्ति। अपरवाक्यंच सञ्ज्ञातावत् हेतु रूपा, तेन हि हेतुनिष्ठ साध्यव्यापकत्वस्य बोधः संजायते। उदाहरणनाम्नाख्यातेन तेन हेतुवृत्ति साध्यव्यायत्वलाभः। उपनयाख्येन चतुर्थवाक्येनचतुरन्शे साध्यव्याप्यहेतोः सम्बन्धस्वरूपपक्षधर्मताया अवगतिः सिध्यति। पञ्चमेन निगमननाम्नाख्यातेन वाक्येनतु साध्यव्याप्यपक्षवृत्ति हेतुनिष्ठाऽबाधितत्वस्य, असत् प्रतिपक्षत्वस्य च बोधेन सह पक्षवृत्ति सांध्यसम्बन्धस्याऽभिधानं प्रयोजनम्। पक्षसत्त्वबोध द्वारा असिंद्धेः पक्षवृत्तिहेतोरभावरूपहेतुदोषस्य, सपक्षसत्त्व, विपक्षाऽसत्त्वस्य च बोधेनविरोधव्यभिचाराऽऽत्मक हेतु दोषस्य, अबाधितत्वाऽसत् प्रतिपक्षत्व विषयकबोधे न हि बाधसत् प्रतिपक्षस्वरूपहेतुदोषस्यनिवृत्तिः सिध्यति। इत्थञ्च न्यायवाक्येन साध्यव्याप्यपक्षवृत्ति निर्दोषहेतोर्लभेन पराऽर्थाऽनुमानः पर्यवस्यति। एवंरीत्याऽत्रशास्त्रे यस्मात् यस्मात् प्रत्यक्षादिप्रमाणेष्वप्यनुमानस्यैवप्राधन्यं गण्यते। अतः तात्पर्यटीकायां बाचस्पतिमिश्रेणोक्तम्– "प्रत्यक्षेण परिकल्पिमप्यर्थमनुमानेन बुभूत्स्यन्ते तर्करसिकाः" अतएव च लौकिकाऽऽमानकस्य 'द्विर्बद्धं सुबद्धं भवति" इत्याकारकस्य सार्थक्यं भवति।

अनुमानमपिसाध्यसाधनयोर्मध्येस्थितस्य स्वाभाविकसम्बन्धस्य योंगमवाप्यैव

स्वकीयकार्यसाधने नैपुण्यं लभते। सम्बन्धोऽयमत्रव्याप्तिनाम्नाख्यातेति न केवलं वैदिकमार्गाऽनुशरणकुर्वत्सु गौतमन्यायाऽऽदिष्वेवप्रसिद्धिः, किन्तु जैनबौद्ध-चार्वाकदर्शनेष्वपितादृशसम्बन्धस्य व्याप्तिनाम्नैवख्यातिरिति ह्यस्यमहनयत्वम्। शास्त्रप्रवृतिसम्पादानाऽर्थं तत्तद् विशेषशब्देषु विलक्षणाऽर्थसम्पादनार्थं तेषु तेषु-शब्देषु विलक्षण संकेतस्यावश्यकतां संचिन्त्य शास्त्रकारैः स्वरचितग्रन्थेषु तथा-प्रयुक्तः योहि पारिभाषिकनामारेव .... शास्त्रेषुप्रथिता वर्तन्ते येषां च परिज्ञानं शास्त्रीयाऽर्थ सम्पत्तौनान्तरीयकमिति, तदर्थं स्थालीपुलाकनीत्याश्रयणेन तादृश कतिपय-पारिभाषिकशब्दानामिह निदर्शनं चिकीर्षामियेखलुनव्यन्यायग्रन्थाऽवबोधेन-द्वारकल्पाः सन्तः तद्ग्रन्थीयनिष्कर्षाऽऽत्मक रहस्यभेदेनेऽद्वितीयाः खलु।

**अथ नव्यन्यायोपयोगिपारिभाषिकशब्दानां परिचयः**

**तत्र प्रतियोगिता**

प्रतियोगिताशब्दस्य प्रचुरतयाप्रयोगः अभावसम्बन्धयोः सन्दर्भे प्रचलति। अभावाऽर्थेप्रयुक्तस्यप्रतियोगिताशब्दस्यविरोधित्वरूपमेवार्थः सिध्यति, तदनुगुणञ्च अभावविरोधिना अभावप्रतियोगीत्युच्यते यथा च घटो घटाऽभावविरोधीति व्यवहारसिद्धः यस्माद्धि घटाऽधिकरणे घटाऽभावीयविरहः तथा घटाऽभावाऽधिकरणेऽपि घटस्याऽसत्त्वमनुभूयते। इत्थञ्च घटघटाऽभावयोरेकाऽधिकरणाऽवृत्तित्वरूपाऽसामानाऽधिकरण्यरूपो विरोधो ज्ञायते। विरोधसत्त्वादेव घटो घटाऽभावस्यविरोधीति व्यवह्रियते। एवं प्रकारेण घटो घटाऽभावप्रतियोगी कथनेन सिध्यतीदं यत् घटो घटाऽभावस्यविरोधी।

एवमेव घटप्रतियोगिकाऽभावस्थले घटस्य, तदभावस्य च सम्बन्धप्रतियोगित्वरूपः, यस्माद् घटः प्रतियोगितासम्बन्धेन स्वाऽभावेऽन्वेति।

**अवच्छेदकता**

परिच्छेदकत्वञ्चावच्छेकताया अर्थः, नियामकत्वं, नियन्त्रकत्वं वा पर्यायः, यश्चयं परिछिन्नं कुर्यात्, नियमितं नियन्त्रितम्वाकुर्यात् सोऽवच्छेदकपदार्थः। अवच्छेदकता च अवच्छेद्यपरिच्छेद्यनियम्य, नियन्त्रणीयभेदेनाऽनेकविधाभवति। अतश्च प्रतियोगिताऽनुयोगिताऽऽधारताऽऽधेयताविषयताविषयिताकार्यताकारणताप्रतिबन्धकता-प्रतिबध्यताऽऽदीनामवच्छेद्यानामनेकत्वात् तदवच्छेदकतानामपिबहुविधत्वं फलति।

अवच्छेदकतायाआश्रयस्यैवाऽवच्छेदपदेन व्यवहारो न्यायनीतौ प्ररोहति।

**प्रतियोगिताऽच्छेदकविमर्शः**

सम्बन्धोधर्मश्चाऽवच्छेदको भवति। येनरूपेणघटाऽऽदि प्रतियोगी स्वाऽभावस्यविरोध्यस्ति, तद् धर्मप्रतियोगिताऽवच्छेदकः। यथा– "संयोगेन घटोनाऽस्ति"

इत्यत्र घटाऽभावस्य प्रतियोगिभूतोघटः, घटत्वरूपेण, तथा संयोगसम्बन्धेन विरोधीसिध्यति, अतः संयोगसम्बन्धः घटगतघटत्वधर्मश्च घटनिष्ठस्वाऽभावीय-प्रतियोगिताया अवच्छेदकः ।

**अथ प्रतियोगिताऽवच्छेदकताविचारः**

स्वरूपसम्बन्धविशेषरूपाऽनतिरिक्तवृत्तित्वस्वरूपाभ्यां प्रतियोगिताऽवच्छेदेकताया द्वैविध्यं सिध्यति । तत्राऽनतिवृत्तित्वरूप प्रतियोगिताऽवच्छेदकताया भेदद्वयं वर्तते । तत्रैकः यः प्रतियोगिताविशेषस्य सहयोगेनप्रकाशितो भवति यथा-घटाऽभावप्रतियोगितायाअनतिरिक्तवृत्तित्वस्य एकोऽर्थ एतादृशोगम्यते घटाऽभाव-प्रतियोगितयाशून्येऽवृत्तित्वाऽऽत्मकः अपरश्चस्वव्यापकघटाऽभावप्रतियोगिता-कत्वम्, घटत्वस्यघटाऽभावप्रतियोगिताशून्ये पटादाववृत्तितया, तथा घटाऽभाव-प्रतियोगिताया घटत्वस्य व्यापकत्वाच्च उपयुक्तोभयार्थयोः मध्ये घटत्वेघटाऽभाव-प्रतियोगिताया अनतिरिक्तवृतित्वरूपाऽवच्छेदकता अस्ति ।

**अनुयोगितास्वरूपः**

एवमेवाऽनुयोगिताऽपि द्विविधस्वरूपवती भवति । घटाऽभाव इत्यत्र घटे-प्रतियोगित्वम् तदभावेऽभावत्व समानाऽधिकरणाऽनुयोगित्वञ्च, अभावत्वमेव तु अनुयोगिताविशेष उच्यते । यथा घटो घटाऽभावस्यप्रतियोगितया घटाऽभावश्च घटस्याऽनुयोगितयानैयायिकमते प्रसिद्धम्, अनुयोगीतथा अनुयोगिता, प्रतियोगी प्रतियोगितया च निरूप्यो भवति, एवं प्रतियागिता अनुयोगी तथा अनुयोगितया निरूप्यो भवति ।

**सम्बन्धीयप्रतियोगिताऽनुयोगितास्वरूपविचारः**

योयेनसम्बन्धेन क्वाप्याश्रितो भवति, सम्बद्धोवाभवति सः सम्बन्धप्रति-योगित्युच्यते, तथा यत्र तिष्ठति, सम्बद्ध्यते वा, सोऽनुयोगीस्यात् तथा विध-स्यसम्बन्धस्य । यथा संयोगेन घटवद्भूतलमित्यत्र घटभूतलयोर्मध्ये संयोगाख्यः सम्बन्धः, तैन च सम्बन्धेन यतोघटोभूतलेतिष्ठति, अतो संयोगसम्बन्धस्य घटोऽनुयोगी, तथा तेन सम्बन्धेनघटस्यभूतलवृत्तितयातादृशसम्बन्धाऽऽधारस्यभूतल-स्याऽनुयोगित्वञ्चसिध्यति । अतः फलतीदं यत् संयोगाख्यसम्बन्धस्य घटः प्रति-योगी तद्वृति सम्बन्धीयप्रतियोगिता, एवं भूतलमनुयोगि, तस्मात्तन्निष्ठासंयोगी-याऽयोगिता च इत्थमेव सम्बन्धस्थलेसर्वत्रैवप्रतियोगिताऽनुयोगितायाः स्वरूपमेवं जातीयकमूह्यम् ।

**सम्बन्धस्वरूपविमर्शः**

यद्द्वारापदार्थद्वयेऽधिकरणाऽऽधेयभावस्य, कार्यकारणभावस्य, विशेष्य-

विशेषणभावस्य, व्याप्यव्यापकसाध्यसाधकविरोध्यविरोधिभावस्य च स्थितिः संस्थीयते स च सम्बन्धपदार्थः, यथा घटवद् भूतलमित्यत्र घटभूतलयोः संयोगादुभयत्राऽऽधाराऽऽधेयभावो व्यवस्थाप्यते। पटतन्त्वोश्चमध्ये समवाय, तादात्म्यसंसर्गवशादाधाराऽधेयभावो जागर्ति। धूमबह्न्योश्चान्तरालेसंयोगस्य सत्त्वादेव व्याप्यव्यापकभावस्यनिर्णयः। गोत्वाऽश्वत्वयोश्चसमवायसम्बन्धाङ्गीकारादेव च विरोध्यविरोधिभावस्योत्पत्तिः फलति। प्रयोजनानां बाहुल्यवशात् सम्बन्धानामपि नानाविधत्वेनास्ति प्रतिरोधस्याऽवसरः, अतो न सम्बन्धस्यैकत्वे सर्वप्रयोजनस्याऽवाप्तिर्भवेदिति।

## सम्बन्धभेदविवरणम्

मुख्यतया सम्बन्धानां षड्भेदाः सन्ति। तथाहि— साक्षात् सम्बन्धः परम्परासम्बन्धः, वृत्तिनियामकसम्बन्धः, सामान्यसम्बन्धोविशेषसम्बन्धश्चेति। तत्र येन सम्बन्धेन आधाराऽऽधेयभावस्य प्रतिपत्तिः स वृत्तिनियामकसम्बन्ध आख्यायते। तत्कोटौ संयोगसमवायादीनामनुप्रवेशः। येन च सम्बन्धेन आधाराऽधेयमानस्याऽवगतिर्नस्यात् तत्र वृत्यनियामकत्वं तादृश सम्बन्धस्यनिश्चीयते, कालिकादैशिकाऽऽदिसम्बन्धानांवृत्यनियामकत्वं न्यायसिद्धान्ते शास्त्रकारेण ज्ञापितम्। यत्र च एक एव संसर्गता, स साक्षात् सम्बन्धदलेप्रविष्टोज्ञेयः। तथा यत्र संसर्गताद्वयं ज्ञायते, सपरम्परासम्बन्धोगीयते। घटवदभूतलमिति ज्ञानीयसंयोगे 'कपालं घटवत्' इत्याकारकप्रतीतौ ज्ञायमाने समवाये चक्रमात् संयोगत्वाऽवच्छिन्ना तथा समवायत्वाऽवच्छिन्नाएकैवप्रतियोगितोलभ्यते, अतोऽयं साक्षात् सम्बन्धः इत्यमेव कालिकदैशिकस्वरूपपर्याप्त्याधेयता विषयताऽऽदीनामपिसाक्षात् सम्बन्धाऽन्तर्गतत्वं सिध्यति, यतस्तेषां सर्वेषां सम्बन्धानां तत्तत् प्रतीतौ एकैवसंसर्गताविद्यते कपालद्वयसंयोगस्य घटेन सह स्वसमवायिसमवायसंसर्गः, घटीयरूपादिभिस्सह चक्षुसः समवायः रूपत्वादिनासह चक्षुसः स्वसंयुक्तसमवायाऽऽदिसंसर्गः परम्पराख्य एव, यतस्तदीयपूर्वभागस्यसम्बन्धः तत्प्रतियोगिनासह, तथा तदुत्तर भागस्यसम्बन्धोऽनुयोगिनैवफलति। अतः संसर्गतैकः तत्पूर्वभागेतथाऽपरासंसर्गता सम्बन्धीयोत्तरभागेतिष्ठतु। एवञ्चोभयसंसर्गताया आश्रयघटितया एतादृशसंसर्गः परम्परासंसर्गाऽभिधया उक्तोभवति। उक्तसम्बन्धेषुचरभीभूतः संसर्गः सामान्यविशेषताख्यः। तत्र संयोगसमवायादयः सम्बन्धसामान्यकोटौ प्रविष्टः। एतादृशगेवसम्बन्धः, किञ्चित् प्रतियोगिकत्त्वम्, अथवा किञ्चिदनुयोगिकत्त्ववैशिष्ट्यात् विशेषसम्बन्धः सिध्यति। सामान्याऽन्तर्गत संयोगः द्रव्यमात्रवृत्तिः, किन्तु घट-

प्रतियोगिकसंयोगाख्योविशेषसम्बन्धः घटमात्रस्यैव। तथाभूतलाऽनुयोगिक संयोगोऽपिभूतलस्यैव इति।

### समवायनिर्वचनम्

द्रव्यगुणकर्मादितोभिन्नोनित्यभूतः स्वतन्त्रः पदार्थः। अयञ्चन्यायवैशेषिकदर्शनस्याऽऽधारभूमिः। न्यायवैशेषिकदर्शनानांमुख्यसिद्धान्तः समवायमाश्रित्यैवप्रतिष्ठितोऽस्ति। जन्यद्रव्यस्य स्वकारणीभूतेऽवयवे, गुणकर्मणां द्रव्याऽऽश्रितत्वेजातेश्चद्रव्यगुणकर्मभिसहाऽऽधाराऽधेयभावनियामकतासमवायस्यैवेति, अतः उपयुक्तयुगलानां सम्बन्धरूपेणैवंसमवायस्यसिद्धिरिति ध्येतम्।

### विशेषणता

न्यायवैशेषिकदर्शनेचोभयार्थेविशेषणताशब्दस्यप्रयोगः, तत्र ज्ञानविषयत्व एकत्र प्रयोगोदृश्यते, अपरत्र स्वरूपसम्बन्धाऽर्थे च। घटवद्भूतलमित्यत्रज्ञाने घटोविशेषणीभूयभूतले भासते। अतो घटे 'घटवद्भूतलमि'ति ज्ञानीयविशेषणताख्याविषयता भवति। स्वरूपसम्बन्धाऽर्थेप्रयुक्तविशेषणताशब्दः त्रिविधाऽर्थप्रतिपादकः, (१) अभावीयविशेषणता, (२) कालिकविशेषणता, (३) दैशिकविशेषणता च।

### अभावीयविशेषणता

अभावीयविशेषणताशब्दस्याऽभावस्यस्वरूपसम्बन्धः, सचाऽभावस्याऽभावस्याऽधिकरणस्वरूपः। यथा– यत्र काले यस्मिन् भूतलादावधिकरणेघटाऽभावस्यबुद्धिः, तत्कालविशिष्टभूतलाऽऽदिस्वरूपत्वेन, भूतलादिना सह अभावस्यसम्बन्धः। कालिकविशेषणता कालिकाविंशेषणताख्यस्यैव कालिक इति सक्षिप्तासञ्ज्ञा, अयञ्च कालस्वरूप एव, कालेनसह घटादिभिसह सम्बन्धाऽन्वेषणायां स्वयं काल एव तत्र सम्बन्धारूपेणसिध्यति योहि कालिकत्त्वेनाऽपि व्यवहार भागभवति।

### दैशिकविशेषणत

दिङ्निष्ठविशेषणता, तथा देशनिष्ठविशेषणतारूपयोरर्थद्वयोरस्यशब्दस्य प्रयोगः। दिङ्निष्ठविशेषणताचदिशास्वरूप एव, तथा देशनिष्ठविशेषणताऽपि देशादनतिरिक्त एव। तथा च दिग्भिस्साकं घटादीनां सकल पदार्थानां सम्बन्धोदिक् स्वरूप एव (दिग्विशेषणतारूप एव) भवति। देशस्वरूपविशेषणता च अभावीयविशेषणताऽऽख्यायपर्यायः, यत्र देशेयोऽभावः प्रतितोभवति, तद्देशीयस्वरूप एव तस्याऽभावस्यसम्बन्धोनिश्चीयते। पूर्वोक्ताः त्रिविधभेदभिन्ना

विशेषणताख्यावृत्तिनियामकाः, अभावीयप्रतियोगितायाः सम्बन्धविधया अवच्छेदिकाश्च भवन्ति।

**अथपर्याप्तिः**

पर्याप्तिरपि स्वरूप सम्बन्धाऽऽत्मक एव, न्यायवैशेषिकदर्शने तदीयस्वरूपाऽभिव्यक्तिः तेनैवरूपेणनिर्धातोदृश्यते, तथाहि— पर्याप्ति'श्चाऽयमेकः', 'इमौद्वौ' इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, इत्यनेन प्रर्याप्तिर्विशेषप्रकारकः स्वरूपसम्बन्धः सिध्यति, तत्र साक्षिरूपा 'अयमेकः' 'इमौद्वौ' इत्याकारिकाप्रतीतिः। 'अयमेकः' इति प्रतीत्या एकत्वस्यपर्याप्तिः सिध्यति, येन एकस्मिन्नेव विद्यमानाया अवच्छेदकतायां: पर्याप्तिरूपसम्बन्धस्य स्वरूपः सङ्केतितो भवति। "इमौद्वौ" इति प्रतीत्या द्वित्वस्यपर्याप्तिः फलितो भवति, यत्रोभयवृत्त्यवच्छेदकताऽऽदि पदार्थानां पर्याप्तिः सङ्केतितो भवति। इयञ्चपर्याप्तिः स्वप्रतियोगिस्वरूपैऽभिन्नतया स्वरूपसम्बन्धविशेषेण्यऽभिधीयते। इह पर्याप्तिस्वरूपस्यलेशमात्रमेवपरामृष्टं विस्तर भयात्। इत्थमेव आधारताऽऽधेयताविषयताविषयिता प्रतियोगिताऽनुयोगिताऽवच्छेदकताऽवच्छेद्यतादीनामपि स्वरूपसम्बन्धादनतिरिक्ततैवेतिनव्यन्याय ग्रन्थानामालोडनात् ज्ञायते। इत्थमेवैतच्छास्त्रीयज्ञानसम्पादनार्थं मुख्यप्रतिपाद्यकोटौ कारणताकार्यता सविशेषप्रतिबन्धकतोत्तजकताशक्ति लक्षणाविषयतापक्षता साध्यताव्याप्तज्यवृत्तिद्वित हेतुतेच्छाद्वेषप्रयत्नभावनातादात्म्यभूतत्व विशेषगुणसामान्यगुणमूर्त्तत्वविभुत्व व्याप्यवृत्त्यवाप्यवृत्तिस्वतोवृत्ताऽप्रामाण्यप्रतियोगिव्यधिकरणभावत्वाऽभावत्वाऽपेक्षाबुद्धिस्मृतिप्रमोषेन्द्रियाऽनुगमाऽभिवाऽन्यतरत्वाऽन्यतमत्वप्रभृतीनां ज्ञानमत्यावश्यकम् अत्र तु विस्तरभयादुपरम्यते।

ग्रन्थास्य लेखने सहयोगेन प्रो० शिवदीपकशर्मा, श्री चित्तनारायण पाठक महोदया विशेष धन्यवादार्हाः प्रकाशने च श्री कुलदीप जैन महोदयाय सश्रद्धं सस्नेहं साधुवादं समर्पये। अस्य महता प्रयासेन ग्रन्थोऽयं प्रकाशितः।

अन्ते च येषां विदुषां परोक्षापरोक्षरूपेण सहयोग प्राप्तः तेभ्योऽपि धन्यवादाः। मानववशाच्च चापल्येन, प्रमादेन वा यदि काचित्त्रुटि स्यात्तर्हि क्षन्तव्यं विद्वद्भिरिति।

काशी, देवदीपावली
कार्तिक पूर्णिमा, वि०सं० २०६१
२६ नवम्बर, २००४

विदुषां वशंवदः
**शर्मोपाह्वयः विजयः**

# विषयानुक्रमणिका





श्री शिवाय नमः

# पञ्चलक्षणीसर्वस्वे

## पारिभाषिकपदार्थसङ्ग्रहप्रारम्भः

### अथ पर्याप्तिगर्भनिवेशप्रकारः

साध्यतावच्छेदकतान्यूनवारकपर्याप्तिगर्भनिवेशप्रकारस्तु साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमिति वा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वमिति वा स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगतावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यः।।

साध्यतावच्छेदकतेतरवारकपर्याप्तिगर्भनिवेशप्रकारस्तु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमिति वा साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकत्वमिति वा स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यः।।

साध्यतावच्छेदकतान्यूनेतरवारक पर्याप्तिद्वयगर्भनिवेशप्रकारस्तु साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वे सति साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमिति वा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकत्वमिति वा स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेककतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्यः। एवमेव हेतुतावच्छेदकत्वादिन्यूनेतरवारकपर्याप्तिगर्भनिवेशप्रकारोपि ग्राह्यः।।

अथ साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिगर्भनिवेशप्रका-

रस्तु साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वमिति वा साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्ननुयोगिताकपर्याप्तिकावच्देदकताकसंसर्गताकत्वमिति वा स्वनिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्य:।।

साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिगर्भनिवेशप्रकारस्तु साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमिति वा साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमिति वा स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपिसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्तयनुयोगितावच्छेदकरूपवृत्तितवमिति वा ग्राह्य:।।

साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयगर्भनिवेशप्रकारस्तु साध्यतानिरूपितसंसर्गतावच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वे सति साध्यतानिरूपित संसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वमिति वा साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमिति वा स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति वा ग्राह्य:। अत्र स्वपदानि स्थलभेदेनाधेयत्वप्रतियोगित्वादिपराणीति ज्ञेयम्। एवमेव हेतुतानिरूपितसंसर्गतावच्छेदकत्वादिन्यूनेतरवारकपर्याप्तिगर्भनिवेशप्रकारोपि ग्राह्य:। तथा च सम्बन्धावच्छिन्नास्वाधेयताप्रभृतिषु तत्तद्दोषवारणाय निरुक्तरीत्या सन्दर्भभेदेन पर्याप्तिगर्भनिवेश: कार्य: इति सिद्धम् ।।

## अथ भावरूपाभावनिरूपणम्

घटाभावाभावो घटस्वरूप:, घटाभाववद्भेदोपि घटस्वरूप:, घटवद्भिन्नभेदो घटस्वरूप:, घटवद्भेदाभावो घटस्वरूप:, सममैयत्यात्। (घटध्वंसप्रागभाव: घटप्रागभावध्वंसश्च घटस्वरूप एव) घटभिन्नभेदो घटत्वरूप:, घटभेदाभावो घटत्वरूप:,

धर्मिभेदधर्मात्यन्ताभावानामैक्यात्समनैयत्याच्च। घटावृत्तिर्नास्तीतिप्रतीतिसिद्धाभावो घटत्वरूप:, सच घटनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभावत: स्वरूपेण नास्ती त्याकारकप्रतिसिद्धभाव एव। पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावोपि घटरूपएव, विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन विशिष्टशुद्धयोरैक्यात्। जलादिवृत्तित्व-विशिष्टो य: पटाभावादि: तदभावस्यापि घटे सत्त्वेन अभावप्रतियोगिकाभावस्य अधिकरणरूपत्वङ्गीकर्तृमते सोपिघटरूप एव। घटाभावस्तद् ज्ञानरूप: तद्ज्ञान-कालस्वरूप: तदधिकरणरूप इति च केचन मन्यन्ते, तन्मते ज्ञानकालातीन्द्रिया-धिकरणानां चक्षुरादिग्रहणायोग्यतया घटाद्यभावस्यापि चक्षुराद्य ग्राह्यत्वप्रसङ्गरूपा अतिप्रसक्तयो दुर्वारा:।।

## प्रकारविशेष्यनिर्णय:

इदमादिसर्वनामपदाभिलापस्थले इदमादिपदार्थो विशेष्यं भवति, यथा अयं पुरुष: एषस्थाणु: असौराजा इत्यादाविदंपदार्थैतत्पदार्थाद: पदार्थानां विशेष्यत्वं स्थाणुत्वादीनां प्रकारत्वं ज्ञेयम्। पृथक् प्रकारबोधकपदानभिलापस्थलेऽयमित्या-दाविदंपदार्थो विशेष्यं इदंत्वं प्रकार:। घट इति ज्ञाने घटो विशेष्यं घटत्वं प्रकार:। मतुप: इत्प्रत्ययस्य वा प्रकारबोधकपदेऽनुप्रवेशे तत्प्रत्ययप्रकृत्यर्थ: प्रकारो भवति, यथा घटवद्भूतलं, धनीपुरुष: इत्यादौ तत्प्रत्ययप्रकृत्यर्थयो: घटधनयो: प्रकारत्वं ग्राह्यम्। एवं विशिष्टपदस्य युक्तपदस्य अधिकरणादिपदानां, वा प्रकारबोधनस्थले विद्यमानत्वे तत्पदपूर्ववर्तिपदार्थ: प्रकार इति ग्राह्यम्, यथा घटविशिष्टं घट-युक्तं घटाधिकरणं भूतलमित्यादिषु तत्तत्पदपूर्ववर्तिघटपदार्थ: प्रकारो भवति। पूर्वोक्तप्रत्ययद्वयस्य विशिष्टादि पदानां वा अनुपादाने तत्तत्पदप्रतिपाद्यतावच्छेदक-धर्म: प्रकारो ग्राह्य:, यथा— घटोऽनित्य: नीलोघट इत्यादौ अनित्यत्वनीलत्व-योस्तादृशयो: प्रकारत्वम्। ऐषा रीति: भेदसम्बन्धेन वस्तुसाध्यकानुमितिस्थलेपि ग्राह्या, यथा— पर्वतोवह्निमान् चैत्रोधनीत्यत्र वह्निधनयो: शब्दोऽनित्य: कार्यत्वा-दित्यादौ तादृशस्यानित्यत्वस्य च साध्यता ग्राह्या। अभेदसम्बन्धेन वस्तुसाध्यका-नुमितिस्थले अयं गौ: सास्नावत्त्वादित्यादौ कुत्रचिन्निरुक्तप्रत्ययाद्यभावेपि साध्य-वाचकपदप्रतिपाद्यतावच्छेदकाश्रयो गौरेव साध्यतयाङ्गीक्रियते। किन्तु कम्बुग्रीवा-दिमत्त्वान् घटत्वादित्यादावभेदसम्बन्धेन वस्तुसाध्यकस्थलेपिं पूर्वोक्तविधया कम्बु-ग्रीवादिमतएव साध्यत्वं ग्राह्यम्। शब्दज्ञानस्थले तु पर्वतोवह्निमान् चैत्रोधनी घट विशिष्टं भूतलमित्यादौ निपातातिरिक्तनामार्थयोरभेदसम्बन्धेनान्वय इति नियमा-

नुसारेण वह्निमदभिन्नः पर्वतः धनस्वाम्यभिन्नश्चैत्रः घटविशिष्टाभिन्नं भूतलमिति तत्तद्विशिष्टानामेवाभेदसम्बन्धेन प्रकारत्वं सम्भवति। मतुबादिप्रत्ययानां विशिष्टादिपदानां च भेदसम्बन्धेन शब्दबोधौपयिकाकांक्षोपयोगितावादिनये अनुमित्यादिस्थलेष्विव तत्तत्प्रत्ययादिपूर्वभाविनामेव प्रकारत्वं ग्राह्यम् । मतुबादिविरहस्थले नीलोघटः घटोऽनित्य इत्यादौ तु नीलाभिन्नोघटः अनित्याभिन्नोघट इत्यभेदसम्बन्धेन प्रकारबोधक पदप्रतिपाद्यतावच्छेदकावच्छिन्नस्यैव प्रकारत्वं ग्राह्यम् ॥

## सदसद्धेतुनिरूपणम्

व्याप्तिपक्षधर्मताविशिष्टत्वं सद्धेतूनां लक्षणम् । व्याप्तिपक्षधर्मत्वोभयाभाववत्त्वमसद्धेतूनां लक्षणम्, व्याप्त्यभाववत्त्वमात्रोक्तौ ह्रदोवह्निमान्धूमादित्यत्र हेतावव्याप्तिः, पक्षधर्मत्वाभाववत्त्वमात्रोक्तौ पर्वतो धूमवान् वह्नेरित्यत्राव्याप्तिः, तदुभयाभावनिवेशे तु "एकसत्त्वे द्वयं नास्तीति प्रतीत्या निरुक्तस्थलद्वयेपि तदुभयाभावस्याक्षततया नाव्याप्तिः । नच उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यत्र हेतौ व्याप्तेः पक्षधर्मतायाश्च सत्त्वादव्याप्तिरिति वाच्यम्, पक्षधर्मतायाः साध्याश्रयपक्षवृत्तित्वरूपत्वेन विवक्षितया दोषाभावात् । नच तथापि निरुक्तपृथिवीत्व हेतौ सद्धेतुलक्षणस्यातिव्याप्तिरिति वाच्यम्, तत्रापि पक्षधर्मतायाः साध्याश्रयपक्षवृत्तितारूपाया विवक्षितत्वात् । अथवा, सव्यभिचाराद्यन्यतमत्वस्य असद्धेतुलक्षणत्वेन सद्भाववत्वस्य सद्धेतुलक्षणत्वेन च विवक्षणे निरुक्तपृथिवीत्वहेतोर्बाधितत्वेन नाव्याप्तिरतिव्याप्तिर्वा ॥

कृत्स्नन्यायशास्त्राध्ययनेन चिरकालाभ्यासेन समधिगम्याः अन्ये एतादृशाः बहवः पारिभाषिकपदार्थाः मदीयतर्कसङ्ग्रहसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहे बहुधा दशोत्तरशताधिकपुटेषु निरूपिताः, व्युत्पित्सुभिस्ते तत्र द्रष्टव्याः॥

इति श्रीमत् कुरुगंट्युपनामक श्रीरामशास्त्रिविरचिते
पञ्चलक्षणीसर्वस्वे पारिभाषिकपदार्थसङ्ग्रहस्समाप्तः॥



श्री शिवाय गुरवे नमः

# पञ्चलक्षणीसर्वस्वम्

## मथुरानाथीयपञ्चलक्षणीव्याख्यानरूपम् समूलम्

वेमूर्युपाख्यरामब्रह्मसुधीन्द्रं गुरुं शिवं ध्यात्वा ।
श्रीरामशास्त्रिणाद्य, क्रियतेऽसौ पञ्चलक्षणीव्याख्या ।।

## चिन्तामणिः

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः, न तावदव्यभिचरितत्वम्, तद्धि न साध्याभाववदवृत्तित्वम्, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्, साध्यवत्प्रतियोगिताकान्योन्याभावासामानाधिकरण्यम्, सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्, साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यभावात् ।।

अथ (प्रत्यक्षमेकं चार्वाका इति प्रतीतिः) प्रत्यक्षप्रमाणमात्राङ्गीकर्तृभिः अनुमानत्वेन (परामर्शत्वेन) अनुमितित्वेन कार्यकारणभावमनङ्गीकर्तृभिश्चार्वाकैः अथानुमानं न प्रमाणम् प्रमितिकरणतावच्छेदकधर्मशून्यत्वादित्यनुमानेन अनुमानेऽप्रमाण्ये प्रसाधिते तन्निराकरणाय परामर्शत्वेनानुमितित्वेन कार्यकारण भावमङ्गीकुर्वद्भिः अनुमानेनैवानुमानेऽप्रामाण्यं साधयतश्चार्वाकानाक्षिपद्भिः नैयायिकैः अथ अनुमानं प्रमाणम् प्रमितिकरणतावच्छेदकधर्मवत्त्वात्, (प्रमितिकरणतावच्छेदकधर्मः परामर्शत्वं व्याप्तिज्ञानत्वं वा) इति प्रतिपक्षहेतौ प्रयुक्ते सति नैयायिकाभिमतमनुमानप्रमाणं निराकर्तुमशक्तैश्चार्वाकैः क्रियमाणामाशङ्कां समाधातुं स्वयमुपादत्ते मणिकारः नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिरिति । नतावदिति । तद्धीति । तदिति व्याप्तिपञ्चके सम्बन्ध्यते । हि यस्मात्, व्याप्तिः तत् अव्यभिचरितत्वशब्दप्रतिपाद्या साध्याभाववदवृत्तित्वादिः न, अतः व्याप्तिः अव्यभिचरितत्वशब्दप्रतिपाद्या नेत्यन्वयः कार्यः। तथाच व्याप्तिः अव्यभिचरितत्वशब्दप्रतिपाद्यभिन्ना अव्यभिचरितत्वशब्दप्रतिपाद्यसाध्याभाववदवृत्तित्वभेदाव्यभिचारितत्वशब्दप्रतिपाद्यसाध्य-

वह्निन्साध्याभाववदवृत्तित्वादिविशेषभेदकूटवत्त्वादित्यनुमानप्रकारो मूलाभिप्रेत:। (साध्याभाववद्वृत्तित्वादे: व्यभिचरितत्वरूपत्वेन) (व्यभिचारत्वेन) साध्याभाववद्वृत्तित्वाभावादे: अव्यभिचरितत्व (व्यभिचाराभाव) शब्दप्रतिपाद्यत्वं सम्भवति)।

नन्वत्र पक्षतावच्छेदकं व्याप्तित्वं साध्याभाववदवृत्तित्वादिरूपम् हेतुव्यापकसाध्यसामानाधिकरण्यत्वरूपं वा, नाद्य: तादृशधर्मावच्छिन्ने अव्यभिचरितत्व-शब्दप्रतिपाद्यभेदाभावरूप साध्याभावस्य सिद्धत्वेन बाधापत्ते:। न द्वितीय:, तद्धर्मावच्छिन्ने तादृशभेदस्य सिद्धत्वेन सिद्धसाधनदोषापत्ते:। ननु व्याप्ति पदप्रतिपाद्यत्वावच्छिन्नस्य पक्षत्वमङ्गीक्रियत इत्यपि न वाच्यम्, तत्र पक्षतावच्छेदकावच्छेदेन साध्यसाधने साध्याभाववदवृत्तित्वाद्यन्तर्भावेण पक्षतावच्छेदकसामानाधिकरण्येन बाधनिश्चयस्य प्रतिबन्धकस्य सत्त्वेन निरूक्तानुमित्यनुपपत्ते:। पक्षतावच्छेदकसामानाधिकरण्येन साध्यसाधने तु तत्र सामानाधिकरण्येन सिद्धेरपि प्रतिबन्धकत्वेन हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्त्यन्तर्भावेण साध्यनिश्चयसत्त्वेनैतदनुमितेरप्यनुपपत्ते: इति चेन्न, अनुमितिजनकतावच्छेदककिञ्चिद्धर्मावच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारताविशिष्टस्य पक्षत्वमङ्गीक्रियते (अनुमितिजनकतावच्छेदकीभूता मुख्यविशेष्यता पक्षतावच्छेदकावच्छिन्ना विशेष्यता, तन्निरूपिता प्रकारता हेतुनिष्ठप्रकारता तन्निरूपिता प्रकारता व्याप्तित्वावच्छिन्ना प्रकारता, तद्विशिष्टा व्याप्ति: अनुमितिजनकज्ञानविषयीभूता व्याप्ति: भवति) तथा च साध्याभाववदवृत्तित्वं हेतुव्यापकसाध्यसामानाधिकरण्यं वा अनुमितिजनकज्ञानविषय इति संदेहस्यैव सत्त्वेन तादृश प्रकारताविशिष्टे साध्यसंशयस्यैव सत्त्वेन पूर्वोक्तविकल्पसमाप्तद्बाधसिद्धसाधनयो: न प्रसक्ति:।

तथा च तादृशप्रकारताविशिष्टं अव्यभिचरितत्वशब्दप्रतिपाद्यभिन्नम् अव्यभिचरित्वशब्दप्रतिपाद्यसाध्याभाववदवृत्तित्वादिविशेषभेदकूटवत्त्वादिति विशेषाभावकूटेन सामान्याभावस्साध्यते। पक्षे हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकशङ्कायां प्रसक्तां यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान्निति सामान्यतोगृहीतव्याप्तिप्रतीतिसिद्धस्य व्याप्यव्यापकभावस्य भङ्गप्रसङ्गलक्षणस्तर्क: उपयुज्यते, नतु कार्य-कारणभावभङ्गप्रसङ्गलक्षणस्तर्क:, अत्र सामान्याभावविशेषाभावानां नित्यत्वात्।

ननु विशेषाभावकूटेन सामान्याभावसाधने विशेषाभावकूटरूप हेतुसिद्धि: प्रथममपेक्षितेत्यतास्तादृशविशेषाभावसाधकमनुमानमावतारयति केवलान्वयिन्य-भावादिति।

अनुमानप्रकारश्च निरुक्ततादृशप्रकारताविशिष्टं अव्यभिचरितत्वशब्दप्रतिपाद्यसाध्याभाववदवृत्तित्वादिपञ्चकभिन्नम् (अत्र पूर्वपक्षीयव्याप्तिपञ्चकभेदः प्रत्येकं साधनीयः) केवलान्वयिनिरूपितवृत्तित्वाभावादिति । ननु केवलान्वयितद्भिन्नेषु हेतुषु तादृशप्रकारताविशिष्टसत्त्वस्य (अनुमितिजनकज्ञानविषयव्याप्तिसत्त्वस्य) अवश्यमुपपादनीयतया केवलान्वयिनिरूपितवृत्तित्वस्यैव तत्र सत्त्वेन हेत्वभाववत्पक्षरूपस्वरूपासिद्धिः, तादृशभेदाभावरूपसाध्याभाववति निरूक्तपूर्वपक्षीयव्याप्तौ केवलान्वयिनिरूपितवृत्तित्वाभावरूपहेतोस्सत्त्वेन व्यभिचारश्चेतिचेन्न, केवलान्वयिनिरूपितवृत्तित्वाभावस्य न स्वरूपसम्बन्धेन हेतुत्वम् किन्तु स्वाभाववत्त्वसम्बन्धेन तदङ्गीक्रियते, तादृशहेतोः साध्याभाववत्यां पूर्वपक्षीयव्याप्तौ स्वाभाववत्त्वसम्बन्धेनाभावान्नव्यभिचारः, तस्य स्वाभाववत्त्वसम्बन्धेनानुमितिजनकज्ञानविषयव्याप्तौ सत्त्वेन न स्वरूपासिद्धिः।। अथवा अव्यभिचरितत्वशब्दप्रतिपाद्यसाध्याभाववदवृत्तित्वादिकं पक्षीकृत्य तादृशप्रकारताविशिष्टभेदस्साधनीयः (पूर्वानुमानसाध्यभेदप्रतियोगिनं पक्षीकृत्य पूर्वानुमानपक्षभेदः साधनीयः) केवलान्वयिनिरूपितवृत्तित्वाभावस्य स्वरूपसम्बन्धेनैव हेतुत्वमस्तु, पक्षीभूतपूर्वपक्षीयव्याप्तौ केवलान्वयिनिरूपितवृत्तित्वाभावस्य स्वरूपसम्बन्धेन सत्त्वेन न स्वरूपासिद्धिः, साध्याभाववत्यामनुमितिजनकज्ञानविषयव्याप्तौ केवलान्वयिनिरूपितवृत्तित्वस्यैव न व्यभिचारः।

इदं वाच्यम् ज्ञेयत्वादित्यत्र साध्याभावसाध्यवद्भेदयोरप्रसिद्धत्वेन तदन्यतरघटितनिरुक्तव्याप्तिपञ्चकस्य तत्राव्याप्तिः। अत्रापि हेतुव्यापकसाध्यसामानाधिकरण्यरूपसिद्धान्तव्याप्तेस्समन्वयो भवति, तथाहि, हेतुः ज्ञेयत्वम्, तदधिकरणं घटादि, तद्वृत्तिः योऽत्यन्ताभावः पटत्वाद्युदाससीनाभावः, तत्प्रतियोगिपटत्वादिकम्, तदप्रतियोगि यत्साध्यं वाच्यत्वरूपं साध्यं, तदधिकरणं घटादि, तद्वृत्तित्वं ज्ञेयत्वरूपहेतौ वर्तते इति।।

शुभम्

श्री मेधादक्षिणामूर्तये नमः

# पञ्चलक्षणीसर्वस्वे

## प्रथमलक्षणारम्भः

### मथुरानाथीयपञ्चलक्षणीमूलारम्भः

**अनुमानप्रामाण्यं निरूप्य व्याप्तिस्वरूपं निरूपणमारभते । नन्वित्यादिना। अनुमिति । हेत्वित्यस्यानुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यर्थः। व्याप्तिज्ञान इत्यत्र विषयत्वं सप्तम्यर्थः। तथाचानुमाननिष्ठप्रामाण्यानुमितिहेतुव्याप्तिज्ञानविषयीभूता व्याप्तिः केत्यर्थः। अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्येनेन व्याप्तेरनुमानप्राणाण्योपपादकत्वकथनात् अनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिस्वरूपनिरूपणे उपोद्घात एव सङ्गतिरिति सूचितम् । उपपादकत्वञ्चात्र ज्ञापकत्वम् ।।**

अनुमाननिष्ठेति । अनुमाननिष्ठप्रामाण्यानुमितिः अनुमानं प्रामाणम् इति प्रमितिकरणतावच्छेदकधर्महेतुकानुमानोद्दश्यकप्रामाण्य (प्रमितिकरणत्व) विधेयकानुमितिः, तद्धेतुव्याप्तिज्ञानं प्रामाण्यव्याप्यप्रमितिकरणतावच्छेदकधर्मवदनुमानमिति परामर्शात्मकं व्याप्तिज्ञानम्, तादृशव्याप्तिज्ञानविषयीभूताव्याप्तिः का जिज्ञासाविषयेत्यर्थः। उपोद्घात एवेति । स्वज्ञानजनकज्ञानविषयत्वमुपोद्घातसङ्गतिः। अत्र व्याप्तौ अनुमानप्रामाण्यसङ्गतिरूपादनीया, तथाहि, अनुमानप्रामाण्यविषयकं यद्ज्ञानं अनुमानं प्रमाणमित्यनुमितिरूपं ज्ञानं, तज्जनकं ज्ञानं प्रामाण्यव्याप्यप्रमितिकरणतावच्छेदकधर्मवदनुमानमिति परामर्शरूपं ज्ञानं, तद्विषयत्वं व्याप्तौ वर्तते इति (चिन्तां प्रकृतसिद्ध्यार्थामुपोद्घातं विदुर्बुधाः इत्युपोद्घातलक्षणम्)। अतः यन्निरूपणानन्तरं यनिरूप्यते तत्तन्निरूपितसङ्गतिमदिति न्यायानुसारेण प्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणेन व्याप्तौ प्रामाण्यसङ्गति प्रदर्शनमुचितमिति भावः। सङ्गतित्वञ्च अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धत्वम्, अत्र-अनन्तराभिधानं प्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणम्, तत्प्रयोजन-

कीभूता या जिज्ञासा अनुमानप्रामाण्यनिरूपणानन्तरं, व्याप्तिनिरूपणं भूयादिति जिज्ञासा; तज्जनकं यत् स्मरणं व्याप्तिस्मरणम्, तत्प्रयोजको निरूप्यनिष्ठोयस्सम्बन्धः उपोद्घातरूपस्सम्बन्धः, तत्त्वमुपोद्घाते वर्तत इति। अत्र प्रथमं प्रामाण्यनिष्ठोपोद्घातज्ञानं, तदन्वेकसम्बन्धिप्रामाण्यज्ञानम्, तदनु एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिन्यायेन अपरसम्बन्धिव्याप्तिविषयकं स्मरणम्, तदनु प्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणं भूयादिति जिज्ञासा, तदनु (अनन्तराभिधानम्) व्याप्तिनिरूपणमिति क्रमो बोध्यः।।

**केचित्तु अनुमितिपदमनुमितिनिष्ठेतरभेदानुमितिपरम्, तथाचानुमितिनिष्ठेतरभेदानुमितौ यो हेतुः प्रागुक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वादिरूपः, तद्घटकं यद्व्याप्तिज्ञानं, तदंशे विशेषणीभूता व्याप्तिः केत्यर्थः। घटकत्वार्थकसप्तमीतत्पुरुषसमासात्, तथाच प्रागुक्तानुमितिलक्षणोपोद्घात एवात्र सङ्गतिरनेन सूचितेत्याहुः।।**

केचित्त्विति। अयं भावः, अनुमितौ हेतुः अनुमितिहेतुः, अनुमितिहेतौव्याप्तिज्ञा अनुमितिहेतुव्याप्तिज्ञानम् इति तन्मते समासः। अनुमितावित्यत्र सप्तम्या निरूपितत्वमर्थः, तस्य हेतु पदार्थैकदेशहेतुतायामन्वयः, हेताविस्यत्र सप्तम्या घटकत्वमर्थः, व्याप्तिज्ञानइत्यत्र सप्तम्याः स्वांशे विशेषणत्वमर्थः। तथाचानुमितिनिष्ठेतरभेदानुमितिहेतुघटकव्याप्तिज्ञानांशे विशेषणीभूता व्याप्तिः जिज्ञासाविषयेस्यर्थः। अत्रानुमितिनिष्ठेतरभेदानुमितिः अनुमितिः इतरभिन्ना, व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वादिति हेतुजन्या अनुमित्युद्देश्यकेतरभेदविधेयकानुमितिः, तद्धेतुः व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपहेतुः (इदं ज्ञापमानलिङ्गस्यानुमितिकरणतावादिमते उपपद्यते, अन्यथाहेतुविषयक परामर्शस्यैवानुमितिहेतुत्वं सम्भवति, नतु तादृशज्ञानत्वस्येति भावः) तद्धटकत्वं, (तद्विषयताव्यापकविषयताकत्वम्) व्याप्ति ज्ञाने सम्भवति। अनुमितिलक्षणोपोद्घात इति। अनुमितिलक्षणं व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वम्। तदुपोद्घातः व्याप्तौ सम्भवति, तथाहि, स्वं निरूक्तज्ञानत्वम्, स्वज्ञानं अनुमितिः व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानं इत्याकारकं ज्ञानं, तज्जनकं यद्ज्ञानं विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वमुद्रया जनकं तद्धटकव्याप्तिज्ञानं, तद्विषयत्वं व्याप्तौवर्तते इति।।

**नतावदिति तावद्वाक्यालङ्कारे। अव्यभिचरितत्वम् अव्यभिचरिततत्वशब्दप्रतिपाद्यम्। हेतुमाह तद्धीति। हि यस्मात् तत्। अव्यभिचरितत्वशब्दप्रतिपाद्यं नेति सर्वस्मिन्नेव लक्षणे सम्बध्यते। तथाच यतो व्याप्तिः साध्याभाववदवृत्तित्वा-**

दिरूपाव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा न, अतोऽव्यभिचरितत्वशब्द प्रतिपाद्य-स्वरूपा नेत्यर्थः पर्यवसितः। विशेषाभावकूटस्य सामान्याभावहेतुता प्रसिद्धैवेति विभावनीयम् ।।

अत्रान्वयप्रकारः चिन्तामणिव्याख्यानावसरे प्रदर्शित इति नात्रोच्यते। सामान्याभावहेतुतापदस्य सामान्यविधेयकानुमितिजनकतावच्छेदकप्रकारताविशेषाश्रयत्वमित्यर्थो वक्तव्यः,अन्यथा अत्यन्ताभावरूपस्य भेदरूपस्य वा सामान्याभावस्य नित्यत्वेन विशेषाभावकूटे तद्धेतुताया अभावेनासङ्गत्यापत्तेः।।

साध्याभाववदवृत्तित्वमिति । वृत्तं वृत्तिः, भावे निष्ठाप्रत्ययात् । वृत्तस्याभावोऽवृत्तम्, वृत्त्यभाव इति यावत् । साध्याभाववतोऽवृत्तं साध्याभाववदवृत्तम्, साध्याभाववद्वृत्त्यभाव इति यावत् । तदत्रास्तीति साध्याभाववदवृत्ती, मत्वर्थीयेनप्रत्ययात् । तस्य भावस्साध्याभाववदवृत्तित्वम् । तथाच साध्याभाववद्वृत्त्यभाववत्त्वमिति फलितमिति प्राञ्चः ।।

वृत्तिः आधेयत्वम् । भावे भावार्थे । निष्ठाप्रत्ययात् अत्र क्त प्रत्ययादित्यर्थः। क्तक्तवतू निष्ठा इति स्मरणात्।।

तदसत् । न कर्मधारयान्मत्वर्थीयोबहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इत्यनुशासनविरोधात् । तत्र कर्मधारयपदस्य बहुव्रीहितरसमासपरत्वात् । तच्चागुणवत्त्वमिति गुणसाधर्म्य व्याख्यानावसरे गुणप्रकाशरहस्ये तद्दीधितिरहस्ये च स्फुटम् ।। अव्ययीभावसमासोत्तरपदार्थे न समं तत्समासानिविष्टपदार्थान्तरान्वयस्या व्युत्पन्नत्वाच्च। भूतलोपकुम्भं भूतलाघटमित्यादौ भूतलवृत्तिकुम्भसमीपभूतलवृत्तिघटात्यन्ताभावयोरप्रतीतेः।।

न कर्मधारयादिति । मतुवादिप्रत्ययप्रतिपाद्याधिकरणाद्यर्थबोधकबहुव्रीहिर्वर्तते यदि तदा कर्मधारयसमासात्परतो मत्वर्थीयो न कार्य इत्यनुशासनार्थः। साध्याभाववतो न वृत्तिः (आधेयत्वम् ) यत्र सः साध्याभाववदवृत्तिः इति बहुव्रीहिसमासेनैव साध्याभावाधिकरणनिरूपितवृत्तित्वाभावाधिकरणबोधस्य सम्भवेन साध्याभाववदवृत्तमत्रास्तीति साध्याभाववदवृत्तीति कर्मधारयोत्तरमत्वर्थीयकरणमसङ्गतमिति भावः। न कर्मधारयान्मत्वर्थीय इत्येतावन्मात्रोक्तौ रामकृष्णवत्पुरं राजपुरुषवत्पुरम् इत्यादिप्रयोगानुपपत्तिः, बहुव्रीहितरसमासात्परत एव मतुपो निषिद्धत्वेन द्वन्द्वाद्युत्तरं तन्निषेधप्रसङ्गात् (यद्यपि व्यधिकरणबहुव्रीहिसमासाङ्गीकारे राज्ञः पुरुषो यस्मिन् तदिति रीत्याबहुव्रीहिसमासकरणे तत्रापि मतुपोऽनुपपत्तिः तथापि तत्र व्यधिकरण बहुव्रीहे-

रनङ्गीकारेण राजपुरुषवत्पुरमिति तत्रोदाहरणं प्रदर्शितम्) बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति निवेशे तु तदर्थबोधक बहुव्रीहेरत्राभावान्नापत्तिः।

कर्मधारयपदस्य यथाश्रुतकर्मधारयसमासार्थकत्वस्वीकारे नीलघटवद्भूतलमित्यादिमतुबाद्यान्तकर्मधारयप्रयोगाणामेवासाधुत्वमुपवर्णितं स्यात् नतु मत्वर्थीयान्तसमासान्तराणाम्, इदानीं कर्मधारयोत्तरमतुपएव निषिद्धत्वात्। अतः कर्मधारयपदस्य बहुव्रीहितरसमासपरत्वमावश्यकम्। अत्र कर्मधारयपदस्य बहुव्रीहीतरसमासार्थकत्वानङ्गीकारे (समाससामान्यपरत्वे) पीताम्बरवद्वैकुण्ठमित्यादिप्रयोगानुपपत्तिः, अत्र बहुव्रीहिसमासात् परतो मतुपस्सत्त्वात्। तत्परत्वाङ्गीकारे बहुव्रीहीतरसमासात्परतएव मतुपो निषिद्धत्वेन बहुव्रीह्युत्तरं मतुपस्सत्वेप्यनुपपत्त्यभावात्। ननु तदर्थप्रतिपत्तिकरो बहुव्रीहिश्चेत्समासात्परतो मत्वर्थीयो न कार्य इत्युक्त्यैव पीताम्बरवद्वैकुण्ठमित्यादौ पीताम्बराश्रयविष्णवधिकरणबोधकबहुव्रीहेरभावेनैव निरुक्तापत्तिवारणसम्भवेन कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वमनावश्यकमितिचेन्न, (सौन्दर्यविशिष्टशुक्लरूपाधिकरणाधिकरणबोधेच्छयोच्चरितस्य सुन्दरशुक्लवान् पट इति मत्यर्थीयघटितवाक्यस्य असाधुत्वापत्तेः (अत्र सुन्दरः शुक्लः शुक्लरूपं यत्र तत् सुन्दरशुक्लं, सौन्दर्यविशिष्टशुक्लरूपाधिकरणम्, तदत्रास्तीति सुन्दरशुक्लवान् इति समासः) सुन्दरशुक्ल इति मत्वर्थीयरहित वाक्येनैव तादृशार्थलाभात् (अत्र सुन्दरः शुक्लः शुक्लरूपं यत्र सः सुन्दरशुक्लं इतिप्रथमं बहुव्रीहिः एतावता सौन्दर्यविशिष्टशुक्लरूपाधिकरणबोधो भवति, तदनु सुन्दरः शुक्लः शुक्लरूपविशिष्टः यत्रेति मतुबर्थप्रतिपत्तिकरद्वितीयबहुव्रीहिणा सौन्दर्यंशुक्लरूपेऽन्वेत्विति विवक्षासहिते न सौन्दर्यविशिष्टशुक्लरूपाधिकरणाधिकरणविषयकबोधोऽङ्गीकर्तव्य इति) नच सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीति न्यायानुसारेण अत्र विद्यमानस्य शुक्लपदस्य शुक्लरूपार्थकत्वं शुक्लरूपविशिष्टार्थकत्वञ्चानुपपन्नमिति नैतत्समाधानं साधीय इति वाच्यम्)।

अत्र समासत्वं नानुगतं, किन्तु कर्मधारयादिषट्कान्यतमत्वरूपं तद्वक्तव्यम्, तथाच अत्र बहुव्रीहीतरपदाभावे बहुव्रीहिसाधारणकर्मधारयादिषट्कान्यतमत्वस्य तदनुशासनबोधितत्वेनाङ्गीकर्तव्यतया गौरवं प्रसज्येत, बहुव्रीहीतरपदप्रवेशने तु बहुव्रीहिव्यावृत्तकर्मधारयादिपञ्चकान्यतमत्स्यैव अनुशासनबोधिततया लाघवसम्भवेन बहुव्रीहीतरपरस्यावश्यकत्वात्। नच कर्मधारयत्वादिविशेषधर्माणामखण्डोपाधित्वाङ्गीकारेणानुगतत्वाङ्गीकारे तुल्ययुक्त्वा समासत्वस्याप्यानुगतत्वस्याक्षतततया (कर्मधारयादिषट्कान्यतमत्वरूपत्वस्याभावेन) अत्रापि गौरवाभावेन नैतदपि समाधानं

साधीय इति वाच्यम्, कर्मधारयपदस्य बहुव्रीहीतरसमासार्थकत्वाङ्गीकारे तदर्थप्रतिपत्तिकर इति वाक्यस्य तदर्थप्रतिपत्तिकर इति वाक्यसत्त्वे कर्मधारयपदस्य बहुव्रीहीतरसमासार्थकत्वस्यचानर्थक्यस्येष्टत्वात्। तथाच यादृशसमासोत्तरमत्वर्थीयप्रत्ययार्थो बहुव्रीहिणा प्रतिपाद्यते तादृशसमासत्वं बहुव्रीहीतरसमासस्यैवेत्यावेदयितुमेव बहुव्रीहीतरपदस्योपात्तत्वमितिज्ञेयम् ॥

गुणसाधर्म्यव्याख्यानावसर इति। गुणानामभावोऽगुणम्, अगुणमत्रास्तीत्यगुणवान्, अगुणवतो भावोऽगुणवत्त्वम् इति विग्रहप्रकल्पनेन अगुणवत्त्वं गुणसाधर्म्यमिति प्रथममभिहितम्, अत्र च नकर्मधारयादित्यनुशानसनविरोधः, तादृशानुशासनस्या नित्यत्वतेऽपि निरुक्तरीत्या विग्रहकरणे गुणसामान्याभाववत्त्वस्यैव लाभात् तस्य च द्रव्ये उत्पत्तिकालावच्छेदेन सत्त्वादतिव्याप्तिरिति च समालोच्य तदनुगुणा अत्र सन्तीति गुणवन्तः, न गुणवन्तोऽगुणवन्तः, तेषां भावोऽगुणवत्त्वमिति रीत्या विग्रहकरणे गुणवद्भिन्नत्वरूपार्थलाभो भवति, यथाच कर्मधारयोत्तरं मतुपोऽप्रविष्टत्वान्नानुशासनविरोधः। नवा भेदस्य व्याप्यवृत्तितया गुणवद्भिन्नत्वस्य द्रव्ये विरहादतिव्याप्तिरित्यभिहितमगुणवत्त्वं गुणसाधर्म्यतया गुणप्रकाशरहस्यतद्दीधितिरहस्ययोरिति भावः॥ कृष्णस्सर्पो यत्रेति मतुबर्थबोधकस्य बहुव्रीहेस्सत्त्वेपि कृष्णसर्पवद्वल्मीकमिति भाष्यप्रयोगानुसारेण नकर्मधारयादिति शास्त्रस्या नित्यत्वमित्यभिप्रायेण साध्याभाववदवृत्तमत्रास्तीति साध्याभाववदवृत्तीति मत्वर्थीयादरे दोषान्तरमाह- अव्ययीभावेति। अत्र वृत्तस्याभावोऽवृत्तमित्यव्ययीभावसमासोत्तरवृत्तपदार्थेनाधेयत्वेन समं तत्समासानिविष्टपदान्तरसाध्याभाववत्पदपदार्थस्य निरूपितत्वसम्बन्धेन तत्पदान्तषष्ठ्यर्थस्य निरूपितत्वस्य स्वरूपसम्बन्धेन वाऽन्वयस्य निषिद्धत्वेन तादृशसमासविधानमनुपपन्नमिति भावः॥

भूतलोपकुम्भमिति। अव्ययीभावेति नियमानङ्गीकारे (तत्समासानिविष्टपदार्थान्तरस्य अव्ययीभावघटकोत्तरपदार्थेनाप्यन्वयस्वीकारे) भूतलोपकुम्भं भूतलाघटमित्यादौ भूतलवृत्तिर्यः कुम्भः तत्समीपस्य बोधः भूतलवृत्तिर्यो घटः तदत्यन्ताभावस्य च बोधस्यात् (वस्तुतस्तुभूतलोपकुम्भमित्यत्र भूतलवृत्तित्वस्य उपकुम्भमित्यव्ययीभावसमासघटकपूर्वपदार्थे कुम्भसामीप्येऽन्वयः, भूतलाघटमित्यत्र भूतलवृत्तित्वस्य अघटमित्यव्ययीभावसमासघटकपूर्वपदार्थे घटाभावेचान्वयोऽभिमतः) (कुम्भस्य समीपे उपकुम्भम्, घटस्याभावोऽघटमिति समासः) अव्ययीभावसमास सघटकपूर्वपदार्थेन समं पदार्थान्तरान्वयस्याभिमततया उत्तरपदं निविष्टम्। उपकुम्भमित्यत्र कुम्भपदार्थस्य तत्समासघटकपूर्वस्थितोपपदार्थसामीप्येऽन्वयाङ्गीकारेण

तत्समासानिविष्टपदं निवेशितम् (अव्ययीभावसमासघटकोत्तरपदार्थनिष्ठविषयतात्वं यत्र यत्र तत्र तत्र तत्समासानिविष्टपदार्थान्तरनिष्ठविषयता निरूपितत्वाभात इति नियमोऽनेन वाक्येन बोध्यते।।

**एतेन वृत्तेरभावोऽवृत्तीत्यव्ययीभावसमासानन्तरं साध्याभाववतोऽवृत्ति यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम्, वृत्तौ साध्याभाववतोऽनन्वयापत्तेः। अव्ययीभावसमासस्याप्यव्ययतया तेन समं समासान्तरासम्भवाच्च। निरुपाख्यादिरूपाव्ययविशेषणामेव समस्यमानत्वे न परिगणितत्वात् ।।**

अव्ययेन समं समासासम्भवे निष्प्रत्यूहम् उपकुंम्भम् अधिगृहम् इत्यादिषु निरूपाद्यव्ययानां समासघटकत्वमनुपपन्नमित्यत आह। निरुपाथीति । तेषां निरूपाख्यादीनां कतिपयाव्ययानां परिगणितत्वेन न तैस्समं समासानुपपत्तिरिति भावः।।

**वस्तुतस्तु साध्याभाववतो न वृत्तिर्यत्रेति त्रिपदव्यधिकरणबहुव्रीह्युत्तरं त्वप्रत्ययः । साध्याभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थः । अन्वयश्चास्य वृत्तौ । तथाच साध्याभावाधिकरणनिरूपितवृत्त्यभाववत्त्वमव्यभिचरितत्वमिति फलितम् । नच व्यधिकरणबहुव्रीहिः न सर्वत्र साधुरिति वाच्यम्, ‘‘अयं हेतुस्साध्याभाववदवृत्ति’’रित्यादौ व्यधिकरणबहुव्रीहिं विना गत्यन्तराभावेन अत्रापि व्यधिकरणबहुव्रीहेस्साधुत्वात् ।।**

अत्र शाब्दबोधप्रकार इत्थम्, साध्याभाववतः न वृत्तिः यत्र सः साध्याभाववदवृत्तिः, साध्याभाववत इत्यत्र षष्ठ्याः निरूपितत्वम्, वृत्तिः आधेयत्वम्, तादृशनिरूपितत्वस्य स्वरूपसम्बन्धेन वृत्तावन्वयः। तादृशवृत्तित्वस्य प्रतियोगितानिरूपकत्वसम्बन्धेन नञर्थीभूताभावेऽन्वयः।. यत्रेत्यत्र त्रल् प्रत्ययस्याधेयत्वमर्थमुयत्पदार्थस्य निरूपितत्वसम्बन्धेनाधेयतायामन्वयः। तथाच यन्निरूपितवृत्तितावान् साध्याभावाधिकरणनिरूपितवृत्तित्वाभाव इति विग्रहवाक्यजनितो बोधः। ‘‘विग्रहवाक्याद्यादृशविशेष्यविशेषणभावापन्नबोधो जायते समासवाक्यात्तद्विपरीतबोधो जायते, इति नियमानुसारेण साध्याभावाधिकरणनिरूपितवृत्तित्वाभावाधिकरणमितिबोधः समासवाक्यतो भवति। तदनुभावार्थकत्वप्रत्ययसंयोजने साध्याभावाधिकरणनिरूपितवृत्तित्वाभावाधिकरणत्वमित्यर्थो लभ्यते। तादृशाभाववत्त्वस्य प्रकृत्यर्थे प्रकारीभूतधर्मो भावप्रत्ययार्थः, इति न्यायेन तादृशाभावरूपत्वेन साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितम्, पर्वतो वह्निमान् धूमादित्यत्र धूमरूपहेतौ लक्षणसमन्वयः क्रियते। तथाहि, साध्यः वह्निः,

तदभावः वह्न्यभावः, तदधिकरणं ह्रदादि। तन्निरूपिता वृत्तिता मीनशैवालादिनिष्ठा वृत्तिता, तादृशवृत्तित्वाभावो धूमरूपहेतौ वर्तत इति। धूमवान् वह्नेरित्यत्र व्यभिचारि हेतौ वह्निस्वरूपे नातिव्याप्तिः, तथाहि, साध्यः धूमः, तदभावो धूमाभावः, तदधिकरणं अयोगोलकम्, तन्निरूपितवृत्तित्वमेव वह्नौ वर्तते, वृत्तित्वाभावो वह्नौ नास्तीति॥

ननु साध्याभाववदवृत्तिरित्यत्रेव साध्याभाववदित्यत्रापि साध्यस्याभावो यस्मिन् स इति व्यधिकरण बहुव्रीहिणैव साध्याभावाधिकरणबोधस्य सम्भवेन "नकर्मधारयान्मत्वर्थीय इति, नियमानुसारेण मत्वर्थीयकरणमसङ्गतमिति वाच्यम्, साध्याभाववदित्यत्र मतुपः न केवलाधिकरणार्थकत्वम्, किन्तु प्रशस्ताधिकरणार्थकत्वमङ्गीक्रियते, तच्चात्र प्राशस्त्यं साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यताऽवच्छेदकावच्छिन्नप्रतियोगिताकाभावाश्रयत्वरूपम्, तथाचात्र निरुक्तप्राशस्त्यरूपमत्वर्थीयार्थबोधकत्वस्य बहुव्रीहावभावेन अत्रत्यमतुपस्तादृशार्थकत्वेनानुपपत्त्यभावात्। नचात्र बहुव्रीहेरपि निरुक्तप्रशस्ताधिकरणबोधकत्वं सम्भवतीति मतुपः (नैरर्थक्यं) असाधुत्वं तदवस्थमेवेति वाच्यम्, एकघटवत्यपि भूतले घटाभाववद्भूतलमिति प्रतीत्यनुरोधेन अभावपदसमभिव्याहारस्थले उभयाभावादिसाधारणप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नबोधएवाङ्गीकर्तव्यः, नतुप्रतियोगितावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नबोधोऽभावपदसमभिव्याहारस्थलेऽङ्गीक्रियते, तथाचात्र बहुव्रीहिसमासादरे तादृशप्रशस्ताधिकरणवोधकत्वासम्भवेन प्राशस्त्यार्थे मतुबादरणस्य युक्तत्वात्।

नच तर्हि उत्तरत्रापि साध्याभाववतः न वृत्तिः यत्रेति बहुव्रीह्यादरणमयुक्तम्, मत्वर्थीयप्रतिपाद्यतादृशवृत्तितात्वातिरिक्त धर्मानवच्छिन्नप्रतियोगिताकाभावाश्रयत्वरूपप्राशस्त्यविशिष्टाधिकरणबोधकत्वस्यतत्रापिबहुव्रीहावभावादिति वाच्यम्, एकघटवति भूतले घटाभावप्रतीतिसत्त्वेपि तादृशभूतले न घट इति प्रतीत्यभावानुरोधेन सप्तम्यन्तानुयोगिवाचकपदसमभिव्याहृतनञः सामान्याभावार्थकत्वस्यावश्यमभ्युपेयतया साध्याभाववतः न वृत्तिः यत्रेत्यत्रापि बहुव्रीहेः नञ्समभिव्याहारबलेन तादृश प्रशस्ताभावाधिकरणबोधकत्वस्याक्षतत्वेनानुपपत्त्यभावात् (विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वे समानाधिकरण बहुव्रीहिः तदभावे व्यधिकरणबहुव्रीहिरिती व्यवस्था ग्राह्या)।

**साध्याभावाधिकरणवृत्तित्वाभावश्च तादृश वृत्तित्वसामान्याभावो वक्तव्यः, तेन धूमवान् वह्नेरित्यादौ धूमाभाववज्जलह्रदादि वृत्त्यभावस्य धूमाभाव-**

वह्निवृत्तित्वजलत्वोभयत्वावच्छिन्नाभावस्य च वह्नौ सत्त्वेपि नातिव्याप्तिः।

साध्याभाववद्वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीया, तेन वह्न्यभाववति धूमावयवजल ह्रदादौ समवायकालिकविशेषणतादिना धूमस्य वृत्तावपि न क्षतिः ।।

वृत्तित्वसामान्याभाव इति। अयं भावः, साध्याभावाधिकरणपदेन ह्रदाद्युपग्रहे तन्निरूपितवृत्तित्वाभावमादाय पर्वतो धूमवान् वह्नेरित्यत्र वह्निरूपहेतावतिव्याप्तिः, अतस्तादृशदोषवारणाय तादृशवृत्तित्वसामान्याभावो निवेश्यः। नच साध्याभावनिष्ठावच्छेदकताका अधिकरणत्वनिष्ठावच्छेदकताका याऽधिकरणनिष्ठावच्छेदकता, तन्निरूपिका वृत्तितात्वनिष्ठावच्छेदकतानिरूपिताका या वृत्तित्वनिष्ठा प्रतियोगिता, तन्निरूपकाभावस्य लक्षणत्वस्वीकारेणैव साध्याभावनिष्ठावच्छेदकताकत्वाधिकरणत्वनिष्ठावच्छेदकताकत्वयोः ह्रदरूपाधिकरणनिष्ठावच्छेदकतायामभावेनह्रदनिरूपित वृत्तित्वाभावमादायातिव्याप्तिवारणसम्भवे कृतं वृत्तित्वसामान्याभावनिवेशेनेति वाच्यम्, (अयं न्यूनवारकपर्याप्तिनिवेशप्रकारः) निरुक्तस्थलएव धूमाभावाधिकरणह्रदनिरूपित वृत्तित्वाभावमादायातिव्याप्तेस्सम्भवात् ।।

ननु साध्याभावनिष्ठावच्छेदकताभिन्ना अधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽधिकरणनिष्ठावच्छेदकता, तन्निरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता तन्निरूपकाभावो व्याप्तिः, तथाच परम्परया निरुक्ताभावप्रतियोगिता निरूपितह्रदनिष्ठावच्छेदकतायाः साध्याभावनिष्ठावच्छेदकताभिन्नाधिकरणत्वनिष्ठावच्छेदकताभिन्नह्रदत्वनिष्ठावच्छेदकता निरूपकत्वेन तदानिरूपकत्वस्य तत्राभावेनैवातिव्याप्तिवारणात् निरुक्ताधिकरणनिष्ठावच्छेदकताभिन्नवृत्तितात्वानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकवृत्तित्व निष्ठाप्रतियोगिताकाभावार्थक तादृशवृत्तित्वसामान्याभावपर्यन्तनिवेशो व्यर्थ इत्यत आह। धूमाभाववद्वृत्तित्वजलत्वोभयेति। धूमवान् वह्नेरित्यत्र वह्निरूपहेतौ धूमाभाववद्वृत्तित्वस्य सत्त्वेपि जलत्वस्याभावेन एकसत्त्वे द्वयं नास्तीति प्रतीत्या तादृशवृत्तित्वजलत्वोभयाभावस्य सत्त्वादतिव्याप्तिरिति भावः। तादृशवृत्तित्वसामान्याभावनिवेशेतु तादृशवृत्तितात्वनिष्ठावच्छेदकताभिन्ना अधिकरणनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदन्निरूपिका या प्रतियोगिता तन्निरूपकाभावोव्याप्तिरिति फलितम्, अत्रोभयाभावीयप्रतियोगितायाः तादृशावच्छेदकताद्वयभिन्नोभयत्वनिष्ठावच्छेदकतानिरूपकत्वेन तदनिरूपकत्ववस्य तादृशप्रतियोगितायामभावेन न तादृशाभावमादायातिव्याप्तिः।।

(तथाच साध्यतावच्छेदकावच्छिन्नत्वनिष्ठावच्छेदकताका साध्यतावच्छेदक-

सम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताका प्रतियोगितात्वनिष्ठावच्छेदकताका या प्रतियोगित्वनिष्ठावच्छेदकता, तन्निरूपिका अभावत्वनिष्ठावच्छेदकतान्निरूपिका या अभावनिष्ठावच्छेदकता, तन्निरूपिका अधिकरणत्वनिष्ठावच्छेदकतान्निरूपिका याऽधिकरणनिष्ठावच्छेदकता, तन्निरूपिका वृत्तितात्वनिष्ठावच्छेदकतान्निरूपिका या वृत्तित्वनिष्ठाप्रतियोगिता, तन्निरूपका भावो व्याप्तिः। अयं केवलन्यूनवारकपर्याप्तिघटितनिवेशप्रकारः।। साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वनिष्ठाऽवच्छेकताभिन्नाप्रतियोगितात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका या प्रतियोगित्वनिष्ठावच्छेदकता, तद्भिन्ना अभावत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽभावनिष्ठाऽवच्छेदकता, तद्भिन्ना अधिकरणत्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका याऽधिकरणनिष्ठाऽवच्छेदकता, तद्भिन्ना वृत्तितात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता, तनिरूपकाभावो व्याप्तिः। अयं केवलेतरवारकपर्याप्तिनिवेशप्रकारः।। एतदुभयमेतेन न्यूनेतरवारकपर्याप्तिनिवेशप्रकारस्सम्भवति)।

(तादृशवृत्तितात्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावो व्याप्तिरितीतरवारकपर्याप्तिनिवेशप्रकारः कार्यः, अत्र प्रतियोगितायाः तादृशवृत्तितात्वातिरिक्तोभयत्वरूपधर्मावच्छिन्नप्रतियोगिताकतया नातिव्याप्तिः) अथवा, साध्याभावाधिकरणनिरूपितवृत्तितात्वघटकसमुदायगतं यत्समुदायत्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तद्वृत्तिः या प्रतियोगिता तन्निरूपकाभावो व्याप्तिरिति न्यूनेतरवारकपर्याप्तिनिवेशे पूर्वोक्तदोषवारणं सम्भवति, तथाहि, अवच्छेदकताः पर्याप्तिसम्बन्धेनाश्रयेषु तद्गतैकत्वदित्वसमुदायत्वाअवच्छेदेन आश्रयभेदेन वर्तन्ते, तथाच स्वपदेन तादृशोभयाभावीयतादृशोभयत्वावच्छिन्नप्रतियोगितायाः परिग्रहणे स्वावच्छेदकतात्वावच्छिन्नस्य पर्याप्तिसम्बन्धेनाधिकरणं उभयत्वघटितः तादृशवृत्तितात्वघटकसमुदायो भवतीति उभयत्वघटिततादृशवृत्तितात्वघटकसमुदायगतसमुदायत्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं भवति (स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताका या पर्याप्तिः उभयत्वघटिततादृशवृत्तितात्वघटकसमुदायानुयोगिनी तादृशोभयत्वावच्छिन्नप्रतियोगितावच्छेदकताप्रतियोगिनी पर्याप्तिः, तदनुयोगी निरुक्तसमुदायः, तदनुयोगितावच्छेदकं उभयत्वघटिततादृशसमुदायगतसमुदायत्वं भवति) साध्याभावाधिकरणनिरूपितवृत्तितात्वघटकसमुदायगतसमुदायत्वन्तु उभयत्वावृत्ति, अतस्तादृशसम्बन्धेन तादृशवृत्तितात्वघटकसमुदायगतसमुदायत्ववृत्तित्वं न तादृशो-

भयाभावीयप्रतियोगितायास्सम्भवति, समुदायत्वयोर्भेदात्, अतस्तादृशप्रतियोगिता-पदेन धूमसामान्याभावद्वृत्तित्वसामान्याभावीयप्रतियोगितैव ग्राह्या, तद्ग्रहणे धूम-सामान्याभाववदयोगोलकनिरूपितवृत्तित्वस्यैव वह्निरूपहेतौ सत्त्वेन तादृशवृत्ति-त्वसामान्याभावस्याभावात् नातिव्याप्तिः। हेतुतावच्छेदकसम्बन्धेनेति। धूमा-वयवेति। पर्वतोवह्निमान् धूमादित्यत्र धूमरूपहेतौ साध्याभावाधिकरणधूमाव-यवनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितामादायाव्याप्तिवारणाय हेतुतावच्छेदक-सम्बन्धावच्छिन्नत्वं वृत्तिताविशेषणं देयम्, तन्निवेशेच साध्याभावाधिकरणधूमाव-यवनिरूपितहेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नवृत्तिताया धूमेऽभावान्नाव्याप्तिः, (धूमान्तरस्य धूमावयवसंयुक्तत्वेपि संयोगेन धूमवान् धूमावयव इति प्रतित्यभावेन धूमावयवनिरूपितसंयोगसम्बन्धावच्छिन्नसम्बद्धतायास्सत्त्वेपि तन्निरूपितलक्षण-घटकवृत्तिताया अभावेन नाव्याप्तिप्रसक्तिः) ननुस्वाश्रयसमवायिनिरूपित (सम-वायसम्बन्धावच्छिन्नवृत्तिता) वृत्तिताभिन्नत्वस्य तादृशवृत्तिताविशेषणत्वाङ्गीकारे-णैव धूमावयवनिरूपितवृत्तितायां स्वपदग्राह्यतादृशवृत्तिताश्रयधूमसमवायिधूमा-वयवनिरूपित समवायसम्बन्धावच्छिन्नवृत्तिताभिन्नत्वाभावे नाव्याप्तेर्वारणात् तादृश-वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वदलनिवेशनस्य वैफल्यम्, नचात्र स्व-त्वाननुगमश्शंक्यः, स्वाश्रयनिरूपितेत्यादिना आधेयताविशिष्टान्यत्वस्य निरुक्त-वृत्तितायां विशेषणीयत्वात्, आधेयतावैशिष्ट्यञ्च स्वतादात्म्य स्वाश्रयसमवायि-निरूपितत्वोभयसम्बन्धेन इत्यत आह। जलह्रदादीति। जन्यानां कालोपाधित्वा-ङ्गीकारेण साध्याभावाधिकरणजलह्रदादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितामा-दाय वह्निमान् धूमादित्यत्र धूमरूपसद्धेतावव्याप्तिरिति भावः।

हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेतु तादृशह्रदादिनिरूपितहेतुतावच्छे-दकसंयोगसम्बन्धावच्छिन्नवृत्तिताया धूमेऽभावेन समन्वयसम्भवात्। हेतुतावच्छे-दकसम्बन्धावच्छिन्नत्वञ्च हेतुतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मा-वच्छिन्नसंसर्गताकत्वे सति हेतुतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंस-र्गताकत्वरूपं ग्राह्यम्, अन्यथा पर्वतोवह्निमान् पर्वतानुयोगिकसमवायसम्बन्धेन द्रव्यत्वादित्यत्र वह्न्यभावाधिकरणह्रदादिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितामा-दायाव्याप्तिः (इदं हेतुतानिरूपितसंसर्गतावच्छेदकतान्यूनवारवारकपर्याप्तिनिवेश-प्रयोजनम्) वह्निमान् धूमादित्यत्र वह्न्यभावाधिकरणनिरूपितकालिकसंयोगान्यन्त-रसम्बन्धावच्छिन्न वृत्तिताभादायाव्याप्तिः, (इदं हेतुतानिरूपितसंसर्गतावच्छेदकतेतर-वारकपर्याप्तिनिवेशप्रयोजनम्) ननु चरमोपात्तवृत्तित्वसामान्याभावस्य प्रथमं व्या-

वृत्तिनिरूपणे पूर्वोपात्तवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्य पश्चान्निरूपणे च किं बीजमितिचेन्न, प्रथमं तादृशसामान्याभावव्यावृत्तेनिरूपणे ह्रदादिनिरूपितकालिकादिसम्बन्धावच्छिन्नवृत्तित्वघटत्वोभयाभावं तद्विशेषाभावादिकमादाय बह्निमान्धूमादित्यत्र समन्वयसम्भवेन तथा निरूपणस्य युक्तत्वात्॥

**साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन वह्निमान् धूमादित्यादौ समवायादिसम्बन्धेन वह्निसामान्याभाववति संयोगसम्बन्धेन तत्तद्वह्नित्व वह्निजलोभयत्वाद्यवच्छिन्नाभावति च पर्वतादौ धूमस्य वृत्ता वपि न क्षतिः।।**

अत्र साध्याभावः साध्यनिष्ठप्रतियोगिताकाभावः, तत्र साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा साध्यनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति पर्वतादौ धूमस्य संयोगसम्बन्धेन वर्तमानतया पर्वतो वह्निमान् धूमादित्यत्र धूमरूपहेताव्याप्त्यापत्तिः। तन्निवेशेतु "येन सम्बन्धेन यस्य साध्यत्वमभिमन्यते स सम्बन्धः साध्यतावच्छेदकसम्बन्धः इति नियमेन अत्र संयोगसम्बन्धः साध्यतावच्छेदकसम्बन्धो भवति, तत्सम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावः संयोगेन वह्निसामान्याभावः तदधिकरणेह्रदादौ हेतोरवृत्त्या नाव्याप्तिरिति भावः। यत्तु अत्र प्रतियोगितायां साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्याधिकरणधर्मावच्छिन्नसंसर्गताकत्वमिति साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिः निवेशनीया, अन्यथा महानसीयवह्न्यभावः महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन महानसीयवह्निमान् महानसीयवह्न्यभावत्वादित्यत्र हेतावव्याप्तिः, तथाहि, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वम् साध्यतानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वम्, तथाचात्र साध्यतानिरूपितसंसर्गतावच्छेदकधर्मः वह्नित्वावच्छिन्नप्रतियोगितात्वमपि भवति, घटितधर्मावच्छिन्नप्रतियोगितायां घटकधर्मावच्छिन्नत्वस्याक्षतत्वात्, तद्धर्मावच्छिन्नसंसर्गताकप्रतियोगिताकाभावः वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन महानसीयवह्न्यभावोपि भवति, वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धस्य वह्नित्वावच्छिन्नस्यैव समानाधिकरणसम्बन्धत्वेन महानसीयवह्नित्वावच्छिन्नस्य व्यधिकरणसम्बन्धत्वेन व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयितया तदधिकरणं महानसीयवह्न्यभावोपि भवति, तनिरूपितवृत्तित्वं हेतोवर्तत इति। अथवा महानसीयवह्निज्ञानं महानसीयवह्नित्वावच्छिन्नविषयतासम्बन्धेन माहनसीयवह्निमत् महासीनयवह्निविषयकज्ञानत्वात् इत्यत्रहेतावव्याप्तिः, तथाहि, साध्यतानिरूपितसंसर्गतावच्छेदकवह्नि

त्वावच्छिन्नविषयतात्वावच्छिन्नसंसर्गताकप्रतियोगिताको योऽभावः वह्नित्वावच्छिन्नविषययतासम्बन्धेन महानसीयवह्निः नास्तीति प्रतीतिसिद्धाभावः, अस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपतया तदधिकरणं महानसीयवह्निविषयकं ज्ञानम्, तन्निरूपितवृत्तित्वं महानसीयवह्निविषयकज्ञानत्वहेतौ वर्तत इति, तत्तुच्छम्, तथाहि– महानसीयवह्नित्वावच्छिन्नं महानसीयवह्न्ययभावे वह्नित्वमात्रावच्छिन्नप्रतियोगितासम्बन्धेनैव (न) वर्तते नतुवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन, महानसीयवह्नित्वावच्छिन्नप्रतियोगिताया अपि वह्नित्वावच्छिन्नप्रतियोगितारूपत्वेन वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धस्य महानसीयवह्नित्वावच्छिन्नस्य व्यधिकरणसम्बन्धत्वाभावेन निरूक्तरीत्या दोषकथनस्यासङ्गतत्वात् । एवमेव महानसीयवह्निसाध्यकज्ञानपक्षस्थलेऽपि वह्नित्वावच्छिन्नविषयतात्वस्य महानसीयवह्नित्वावच्छिन्नविषयतासाधारणतया पूर्वोक्तविधया दोषाभावात् इति ॥

वस्तुतस्तु, संयोगसमवायान्यतरसम्बन्धेन वह्निमान् धूमादित्यत्र साध्यतान्निरूपितसंसर्गतावच्छेदकसमवायत्वावच्छिन्नसंसर्गताकप्रतियोगिताकं समवायेन वह्न्यभावमादायाव्याप्तिः। साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशेतु निरुक्तरीत्या नाव्याप्तिप्रसक्तिः। तथाहि यथाश्रुत न्यूनवारकपर्याप्तिरत्र साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वरूपा निवेशनीया, तथा च, साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मः प्रकृते संयोगत्वसमवायत्वान्यतरत्वरूपधर्मत्रितयं भवति, पर्याप्तेः यावतामेवाधिकरणानामनुयोगित्वात्, तादृशधर्मत्रयावच्छिन्नसंसर्गताकप्रतियोगिताकाभावः संयोगसमवायान्यतरसम्बन्धेन वह्निः नास्तीति प्रतीतिसिद्धाभावः, तदधिकरणं न पर्वत इति नाव्याप्तिः। नच समुदायः प्रत्येकान्नातिरिच्यत इति नियमेन समुदायस्य तादृशपर्याप्त्यधिकरणत्वे प्रत्येकस्यापि तदधिकरणत्वस्याङ्गीकर्तव्यतया पुनरपि न्यूनधर्मावच्छिन्नसंसर्गताकप्रतियोगितामादायाव्याप्तितादवस्थ्यमिति वाच्यम्, स्वनिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यता निरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व रूपन्यूनवारकपर्याप्तेः निवेशनीयत्वात्, अत्र साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं संयोगत्व समवायत्वैतदुभयगतं द्वित्वं भवति, निरूक्तप्रतियोगितानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकन्तु केवलसमवायत्वगतैकत्वं भवतीति धर्मयोर्भेदेन तादृशसम्बन्धेन तद्वृत्तित्वस्यतादृशप्रतियोगितायामभावेन तादृशप्रति-

योगितामादाय पूर्वोक्तस्थले नाव्याप्ति, (एवमेव विषयत्वप्रतियोगित्वादि सम्बन्धेन पदार्थसाध्यकस्थलेषु पूर्वनिर्दिष्टेष्वपि अव्याप्त्यसम्भवो ग्राह्यः)।

अत्रैव प्रतियोगितायां साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिरपि निवेशनीया, अन्यथा पर्वतो वह्निमान् धूमादित्यत्र महानसानुयोगिकसंयोगसम्बन्धेन (तत्तद्वह्निप्रतियोगिकसंयोगसम्बन्धेन) (संयोगसमवायोभयसम्बन्धेन) वह्निः नास्ती-तिप्रतीतिसिद्धाभावाधिकरणपर्वतादौ धूमस्य संयोगेन वृत्त्याऽव्याप्तिः। अथवा, वह्न्यभावो वह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निमान् वह्न्ययभावत्वादित्यत्र हेतावव्याप्तिः, तथाहि, महानसीयवह्नित्वावच्छिन्न प्रतियोगितासम्बन्धावच्छिन्नप्रति-योगितायामपि "अधिकस्य प्रविष्टत्वेपि न तद्धानिरिति नियमेन तादृशन्यूनवारक-पर्याप्तेरक्षततया व्यधिकरणसम्बन्धावच्छिन्न तादृशप्रतियोगिताकाभाववति वह्न्यभावे हेतोरक्षतत्वादिति।। यद्वा, वह्नित्वावच्छिन्नविषयतासम्बन्धेन वह्निसाध्यकस्थले वह्निविषयकज्ञानत्वस्य हेतुतायामव्याप्तिः, महानसीयवह्नित्वावच्छिन्नविषयता-सम्बन्धेन वह्न्यभावाधिकरणे केवलवह्निविषयकज्ञानेहेतोर्वृत्तेरिति। इतरवारक-पर्याप्तिनिवेशेतु नाव्याप्तिः, तथाहि, साहि साध्यतावच्छेदकसम्बन्धातिरिक्तसम्ब-न्धानवच्छिन्नत्वरूपानिरुक्तोभयसम्बन्धावच्छिन्न प्रतियोगितायाः तदतिरिक्तसमवाय सम्बन्धावच्छिन्नत्वेन न तादृशाभावमादायाव्याप्तिः।

नच महानसाद्यनुयोगिकसंयोगस्य तदतिरिक्तत्वाभावेननिरूक्तविधयाऽव्याप्तिः तदवस्थैवेति वाच्यम्, साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्ग-ताकत्वरूपा सा निवेश्यते, तथा च निरुक्तप्रतियोगितानां साध्यतानिरूपितसंसर्गता-वच्छेदकातिरिक्तमहानसीयत्वादि धर्मावच्छिन्नसंसर्गताकतया न तादृशाभावाना-दायतत्रतत्राव्याप्तिसम्भवः।।

नच साध्यतानिरूपित संसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वमित्यत्र तदन-वच्छिन्नत्वस्य तदवच्छिन्नत्वसामान्याभावरूपत्वे तस्यापि तदवच्छिन्नत्वत्वाद्यरितिक्त-धर्मानवच्छिन्नप्रतियोगिताकाभावरूपत्वेन परिष्करणीयतयाऽनवस्थाप्रसङ्गः, तदन-वच्छिन्नत्वस्य तदवच्छिन्नत्वनिष्टप्रतियोगिताकाभावरूपत्वे विशेषाभावादिसाधारण्येन विशिष्टाभावोभयाभावादिकमादाय पूर्वोक्तस्थलेष्वव्याप्तितादवस्थ्यमिति वाच्यम्, स्वनिरूपिसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिक पर्याप्त्यनुयोगिता-वच्छेदकरूपवृत्तित्वरूप संसर्गतावच्छेदकेतरवारकपर्याप्तिगर्भानिवेशे दोषप्रसक्त-यभावात्, स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगि-

तावच्छेदकधर्मः महानसीयत्वादिघटितसमुदायगतसमुदायत्वरूपधर्मः, साध्यतानिरूपितसंसर्गतावच्छेदकता प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मः स्थलभेदेन संयोगत्वगतैकत्वकेवलवह्नित्वावच्छिन्नप्रतियोगितात्वकेवलवह्नित्वावच्छिन्नविषयतात्वादिगतं समुदायत्वं भवति, इति धर्मभेदसद्भावेन न तादृशप्रतियोगिता आदाय पूर्वोक्तस्थलेप्वव्याप्तिप्रसक्तिः॥

स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्युनयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिरिति साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारो ग्राह्यः। पर्याप्तिनिवेशप्रकारस्सर्वोप्येतमदीयपारिभाषिकपदार्थसङ्ग्रहे द्रष्टव्यः॥

साध्यतावच्छेकधर्मावच्छिन्नत्वस्थलेपि न्यूनेतरवारकपर्याप्तिनिवेशः कार्य इति सूचयति। वह्नित्वजलत्वोभयेति। अत्र प्रतियोगितायां साध्यनिष्ठत्वानिवेशे घटाभाववद्वृत्तितामादायवह्निमान् धूमादित्यत्राव्याप्तिः, साध्यनिष्ठत्वनिवेशेतु घटाभावस्यातादृशतया नाव्याप्तिः। साध्यनिष्ठत्वस्य प्रतियोगितायां निवेशेपि महानसीयवह्न्यादिगततत्तव्द्यक्तित्वावच्छिन्नाभाव (तद् व्याक्ति नास्ति एतव्द्यक्तिः नास्तीतिप्रतीतिसिद्धाभाव) मादाय पुनस्तत्रैवाव्याप्तिरिति साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वं निवेशनीयम्, तन्निवेशे तत्तव्यक्तित्वावच्छिन्नप्रतियोगितायां साध्यतावच्छेकबह्नित्वाद्यवच्छिन्नत्वाभावान्नाव्याप्तिः।

नन्वेवमपि महानसीयवह्नित्वावच्छिन्नविषयतासम्बन्धेन महानसीयवह्निमत् महानसीयवह्निविषयकज्ञानत्वादित्यत्र महानसीयवह्नित्वावच्छिन्नविषयतासम्बन्धेन वह्निसामान्याभावाधिकरणे महानसीयवह्निविषयकज्ञाने हेतोर्वृत्त्याव्याप्तिः। महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन महानसीयवह्निमान् महानसीयवह्न्यभावत्वादित्यत्र महानसीयवह्नित्वावच्छिन्नप्रतियोगितासम्बन्धेन वह्निसामान्याभावाधिकरणे महानसीयवह्न्यभावे हेतोर्वृत्त्याऽव्याप्तिच्चेतिचेन्न। साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वस्य निवेशनीयत्वात् । नच समुदायः प्रत्येकान्नातिरिच्यत इति न्यायेन समुदायस्य प्रत्येकाभिन्नतया प्रत्येकस्यापि साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मतया निरुक्ता व्याप्तिः तदवस्थैवेति वाच्यम्, साध्यतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वस्य प्रतियोगितायां निवेशनीयत्वात्, अत्र साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं महानसी-

यत्ववह्नित्वैतदुभयगतद्वित्वं भवति, तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताका वह्निसामान्याभावीयप्रतियोगिता न भवति, तस्याः वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वात्, अतोवह्निसामान्याभावमादाय नाव्याप्तिः॥

अत्र प्रतियोगितायां साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वं निवेशनीयम्, अन्यथा पर्वतो वह्निमान् धूमादित्यत्र साध्यतावच्छेदकतापर्याप्त्यधिकरणवावह्नित्वधर्माच्छिन्नप्रतियोगिताक महानसीयवह्न्यभावं पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावं वह्निघटत्वोभयाभावञ्चादायाव्याप्तिः। अथवा वह्निज्ञानं विषयतासम्बन्धेन वह्निमत् वह्निविषयकनिश्चयत्वादित्यत्र वह्न्यभावः प्रतियोगिता सम्बन्धेन वह्निमान् वह्न्यभावत्वादित्यत्रच विषयतासम्बन्धेन महानसीयवह्निसामान्याभावाधिकरणे वह्निविषयकज्ञाने प्रतियोगितासम्बन्धेन महानसीयवह्निसामान्याभावाधिकरणे वह्निसामान्याभावे च निरुक्तहेत्वोः क्रमेण सत्त्वादव्याप्तिश्च। तन्निवेशे ना व्याप्तिः। साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वञ्चस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगिकावच्छेदकत्वसम्वन्धेन साध्यतावच्छेदकताप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वरूपं ग्राह्यम्, अन्यथा समुपदर्शितदोषग्रासप्रसङ्गात् ॥

(अत्र न्यूनेतरवारकपर्याप्तिद्वयमेलेने स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्याप्रतियोगितेति लक्षणं लभ्यते)।

नच निरूक्तरीत्या पर्याप्तिद्वयमनिवेश्य प्रतियोगितायां प्रकृतसाध्यतावच्छेदकव्याप्यत्वनिवेशेनैव महानसीयवह्निसाध्यकस्थले वह्निसामान्याभावीयप्रतियोगितां वह्निमान्धूमादित्यत्रवह्निघटत्वोभयत्वावच्छिन्नप्रतियोगित्वादिकंमादायाव्याप्तिवारणात् कृतं पर्याप्तिद्वयनिवेशेनेति वाच्यम्, वह्निमान् धूमादित्यत्र महानसीयवह्नित्वावच्छिन्नप्रतियोगितामादायाव्याप्तेः, नच साध्यतावच्छेदकव्यापकत्वमपि प्रतियोगितायां निवेश्यत इति वाच्यम्, तार्णातार्णदहनोभयं नास्तीति प्रतीतिसिद्धाभावीयोभयत्वावच्छिन्नप्रतियोगितामादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवात्॥

नचेतरवारकपर्याप्तिमात्रनिवेशेनैव तार्णातार्णदहनोभयत्वावच्छिन्नप्रतियोगितामादाय दोषवारणसम्भवात् न्यूनवारकपर्याप्तिनिवेशस्य वैकल्यमेवेति वाच्यम्, विषयतासम्बन्धेन महानसीयवह्निसाध्यकस्थले महानसीयसवह्निज्ञानत्वहेतौ वह्निसामान्याभावमादायाव्याप्तेः नच साध्यतावच्छेदकव्याप्यत्वनिवेशेनैव वह्निसामा-

न्याभावीयप्रतियोगिताया वारणात् न्यूनवारकपर्याप्तिनिवेशो विफलएवेति वाच्यम्, प्रमेयवान् धूमादित्यत्र साध्यतावच्छेदकाभावस्याप्रसिद्धतया तद्धटितव्याप्यत्वनिवेशस्य कर्तुमशक्यत्वात्, नच व्याप्यत्वस्य स्वव्यापकतत्कत्वरूपस्य निवेशेनैवाप्रसिद्धिवारणसम्भवात् न्यूनवारकवैफल्यं दुर्वारमेवेति वाच्यम्, वह्निधूमान्यतरवान् वाह्निरित्यत्र धूमत्वावच्छिन्नप्रतियोगितायाः, साध्यतावच्छेदकव्याप्यतया तन्निरूपकाभावद्वृत्तिताया वह्नौ सत्त्वादव्याप्तेः, अत्र, साक्षात्परम्परया साध्यविशेषणानाममपिसाध्यतावच्छेदकत्वाङ्गीकारेण वह्नित्वधूमत्वतदन्यतरत्वानां त्रयाणामपि साध्यतावच्छेदकतया धूमंत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वप्रसक्त्यभावात्।।

नच वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोः प्रतियोगितायां निवेशादेव वह्निमान्धूमादित्यत्र महानसीयत्वविशिष्टवह्नित्वावच्छिन्नायाः पूर्वक्षणवृत्तित्वविशिष्टवह्नित्वावच्छिन्नायाः वह्निघटत्वोभयत्वावच्छिन्नायाश्च प्रतियोगिताया वारणादितरवारक पर्याप्तिनिवेशो व्यर्थ इति वाच्यम्, महानसीयत्वविशिष्टवह्निमान् धूमादित्यत्र साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगितायाः नियतं वैशिष्ट्यावच्छिन्नतया वह्निधूमोभयवान् धूमादित्यत्र तादृशप्रतियोगिताया नियतं उभयत्वरूपव्यासज्यवृत्ति धर्मावच्छिन्नतया उभयत्राव्याव्यप्तिसम्भवेन वैशिष्ट्यव्यासज्यवृत्ति धर्मानवच्छिन्नत्वयोः लक्षण निवेशयितुमाशक्यतया इतरवारक पर्याप्तेरावश्यकत्वात्, नच साध्यतावच्छेदकातिरिक्तवैशिष्ठ्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोरेवात्र निवेशिनीयतया निरुक्तस्थलयोः वैशिष्ट्योभयत्वयोः साध्यतावच्छेदकरूपतया तदतिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य साध्यतावच्छेदकतापर्याप्त्यधिकरण धर्मावच्छिन्नपूर्वोक्त प्रतियोगितायामक्षततयाऽव्याप्त्योः वारणात् इतरवारकपर्याप्तिनिवेशस्य प्रयोजनं नास्त्येवेतिवाच्ययम्, साध्यतावच्छेदकातिरिक्तवैशिष्ट्याव्यासज्यवृत्तिधर्मानवच्छिन्नत्वापेक्षया साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वस्यैव लघुत्वात्, किञ्चवैशिष्टव्यासज्यवृत्तिधर्मानवछिन्नत्वस्थलेऽवच्छिन्नत्वसामान्याभावावच्छिन्नत्वनिष्ठप्रतियोगिताकाभाविकल्पोपदर्शितदोषवारणञ्च दुश्शक्यम्, साध्यतावच्छेदकातिरिक्त धर्मानवच्छिन्नत्वनिवेशे तु स्वावच्छेदकतात्वावच्छिन्नेत्यादिनिरुक्तरीत्या निवेशकरणे वाधकाभावात् इति।।

अत्र साध्यतावच्छेदकावच्छिन्नत्वं साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपकत्वम्, अत्र साध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसम्भवन्धावच्चिछन्नत्वं विशेषणं देयम्, अन्यथा वह्नित्वविशिष्टस्य संयोगेन साध्यतायां

धूमरूप सद्धेतावव्याप्तिः, विषयतासम्बन्धेन वह्नित्वविशिष्टाभाववति पर्वतादौ धूमस्य सत्त्वात्, तन्निवेशेतु अत्र वह्नित्वनिष्ठावच्छेदकताया विषयतासम्बन्धावच्छिन्नतया साध्यतावच्छेदकतावच्छेदकसमवायसम्बन्धावच्छिन्नत्वाभावेन न तादृशाभावमादायाव्याप्तिः।। अत्र साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वञ्च साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वे सति साध्यतावच्छेदकतानिरूपित संसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वम्, अत्र न्यूनवारकपर्याप्त्यनिवेशे विषयत्व समवायान्येतरसम्बन्धेन वह्नित्वविशिष्टस्य साध्यतायां धूमादेहेतुतायां विषयतासम्बन्धेन वह्नित्वविशिष्टं नास्तीति प्रतीतिसिद्धाभावमादायाव्यावृयाप्तिः, स्वाभाववन्निरूपितसंयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन वह्निविशिष्टस्य साध्यतायां जलादेर्हेतुतायां संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन वह्निविशिष्टं नास्तीति प्रतीतिसिद्धाभावञ्चादया व्याप्तिः, न्यूनवारकपर्याप्तिनिवेशेतु तदन्यतरसम्बन्धेन वह्नित्व विशिष्टस्य वह्नेः पर्वते सत्त्वेन तादृशाधेयतासम्बन्धेन वह्निविशिष्टस्य मीनशैवालादेश्च जलह्रदादौ सत्त्वेनच न निरुक्ताभावामादायाव्याप्तिः।।

इतरवारकपर्याप्त्यनिवेशे वह्निमान् धूमादित्यत्र महानसीयवह्न्यनुयोगिकसमवाय सम्बन्धेन वह्नित्वविशिष्टाभाववति पर्वतादौ धूमस्य सत्त्वेनाव्याप्तिः, इतरवारकपर्याप्ति निवेशेतु महानसीयवह्न्यनुयोगिकत्वस्य साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकातिरिक्तस्य प्रतियोगितावच्छेदकतानिरूपितसंसर्गतावच्छेदककुक्षिप्रविष्टत्वेन न तादृशाभावमादायाव्याप्तिः ।।

ननु रूपत्वव्याप्यजातिमत्त्वान् रूपादित्यत्राव्याप्तिः, तथाहि, अत्र रूपत्वव्याप्यानां नीलत्वपीतत्वादिजातीनां साध्यतावच्छेदकतया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावरूपस्य नीलो नास्तीत्याकारकप्रतीतिसिद्धाभावस्याधिकरणे पीतपटादौ रूपस्य सत्त्वात् इति वाच्यम्, साध्यतावच्छेदकतावच्छेदकधर्मावच्छिन्नावच्छेदकताप्रतियोगिताकाभावस्य लक्षणघटकत्वाङ्गीकारेण रूपत्वव्याप्यजातिमान्नास्तीतिप्रतीतिसिद्धाभावस्यैव घटकतया तादृशाभावमादाय दोषाभावात्, च वह्नित्वविशिष्टवान् धूमादित्यत्र वह्नित्वस्योल्लिखमानतया साध्यतावच्छेदकतावच्छेदकस्य प्रसिद्धत्वेपि वह्निमान्धूमादित्यत्र निरवच्छिन्नसाध्यतावच्छेदककस्थले साध्यतावच्छेदकतावच्छेदकस्यप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्, रूपत्वव्याप्यजातिमत्त्वान् रूपादित्यत्र न समवायसम्बन्धेन रूपत्वव्याप्यजातेः साध्यतावच्छेदकत्वम्, किन्तु स्वाश्रयसमवायसम्बन्धेन रूपत्व-

व्याप्यजातितत्वस्यैव साध्यातावच्छेदकत्वमङ्गीक्रियते, तथाच साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्न साध्यतावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताकाभावः स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्य जातित्वविशिष्टं नास्तीति प्रतीतिसिद्धाभावः, तदधिकरणं गुणादिरेव, तन्निरूपितवृत्तित्वाभावो हेतौ वर्तत एवेति नाव्याप्तिः। साध्यतावच्छेदकतावच्छेदकधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणेऽनिविष्टत्वेन न वह्निमान् धूमादित्याव्याप्तिप्रसक्तिः॥

नच तथापि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र निरवच्छिन्नसाध्यकस्थले साध्यतावच्छेदकस्यैवाप्रसिद्धतया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावघटितलक्षणस्याव्याप्तिरिति वाच्यम्, लक्ष्यभेदेन लक्षणभेदात् द्रव्यं विशिष्टसत्त्वादिति निरवच्छिन्नसाध्यकस्थले द्रव्येतरावृत्तित्वस्यैव लक्षणत्वेन न साध्यतावच्छेदकाप्रसिद्धिनिबन्धनाव्याप्तिः॥

ननु सम्भवति लघौ धर्मे गुरौ तदभावादिति नियमेन लघुधर्मे प्रतियोगितावच्छेदकत्वस्य सम्भवे गुरुधर्मे तस्यानङ्गीकृतत्वेन प्रमेयवह्निः नास्तीत्याकारकप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वरूपातिप्रसङ्गानापादकलघुधर्म एव स्वीकृतत्वे न गुरौ प्रमेयत्वविशिष्टवह्नित्वे तस्य स्वीकारे प्रयोजनाभावेन प्रमेयवह्निमान् धूमादित्यत्र साध्यतावच्छेदकतापर्याप्त्यधिकरण प्रमेयत्ववह्नित्वरूपधर्मद्वयावच्छिन्नप्रतियोगिताया अप्रतिसिद्ध्याऽव्याप्तिः (अत्र साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगितावह्नित्वावच्छिन्ना प्रसिद्धैव) किञ्च कम्बुग्रीवादिमान्नास्तीत्याकारकप्रतीतिसिद्धाभावप्रतियोगितावच्छेदकत्वस्य घटावयवसंयोगविशेषरूपकम्बुग्रीवासु स्वीकारे गौरवेण अतिप्रसङ्गानापादकलघुधर्मरूपे घटत्व एव स्वीकारेण साध्यतावच्छेदकतापर्याप्त्यधिकरणकम्बुग्रीवादिमत्त्वावच्छिन्नायाः प्रतियोगितायाः घटत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तघटत्वरूपधर्मावच्छिन्नतया तदनवच्छिन्नायास्साध्यप्रतियोगितायाश्च प्रसिद्ध्याऽव्याप्तिरिति चेत्, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक प्रतियोगिताकाभावस्यैव साध्याभावशब्दार्थत्वोपगमेन दोषाभावात्, तथाहि प्रमेयवह्निमान् धूमादित्यत्र साध्यतावच्छेदकप्रमेयवह्नित्वावच्छिन्नाधिकरणे महानसादौ वह्निसामान्याभावीयप्रतियोगिताविशिष्टं नास्तीत्याकारकप्रतीतिसिद्धाभावस्यासत्त्वेन वह्नित्वावच्छिन्ना सामान्याभावीया प्रतियोगिता तद्वृत्त्यभावप्रतियोगितानवच्छेदकेति तन्निरूपकवह्निसामान्याभावाधिकरणनिरूपितवृत्तित्वसामान्याभावस्य हेतौ सत्त्वान्नाव्याप्तिः कम्बुग्रीवादिमत्त्वान् घटत्वादित्यत्र साध्यतावच्छेदकावच्छिन्नस्य कम्बुग्रीवादिमतः

घटेघटत्वावच्छिन्नप्रतियोगिताविशिष्टस्य साध्यतावच्छेदकतादात्म्यसम्बन्धेनाधिकरणे घटेघटत्वावच्छिन्नप्रतियोगिताकभेदाधिकरणसत्त्वेन तद्वृत्त्यभावप्रतियोगितानवच्छेदकघटत्वावच्छिन्नप्रतियोगिताकभेदाधिकरण- सत्त्वेन तद्वृत्त्यभावप्रतियोगितानवच्छेदकघटत्वहेतौ सत्त्वात्समन्वयः। वह्निमान् धूमादित्यादौ पटादिनिरूपितवृत्तित्वाभावस्य घटत्वहेतौ सत्त्वात्समन्वयः। नचैवमपि वह्निमान् धूमादित्यादौ साध्याधिकरणे वह्निसामान्याभावमादाय समन्वयः। नचैवमपि वह्निमान् धूमादित्यादौ साध्याधिकरणे घटादिवृत्तित्वविशिष्ट द्रव्यत्वावच्छिन्नप्रतियोगिताविशिष्टस्य घटत्वद्रव्यत्वोभयाभावीयप्रतियोगिताविशिष्टस्य द्रव्यत्वस्य विद्यमानतया घटादिवृत्तित्वविशिष्टद्रव्यत्वाभाव द्रव्यत्वघटत्वोभयाभावयोः लक्षणघटकत्वेन तदधिकरणपर्वतादिनिरूपितवृत्तितामादायाव्याप्तिरिति वाच्यम्, साध्यव्यापकतावच्छेदकप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोः निवेशनीयत्वेन पूर्वोक्तविधया दोषाभावात् ॥

नचैवमपि महानसीयत्वविशिष्टवह्निमान् महानसीयधूमादित्यत्र विशिष्टसाध्यकस्थले वह्निधूमोभयवान् धूमादित्यत्र व्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकस्थले विशिष्टाभावोभयाभावात्मकसाध्याभावयोरेव लक्षणघटकतया तत्र वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वाभावेनाव्याप्तिरिति वाच्यम्, वह्निसामान्याभावद्रव्यत्वसामान्याभावादिकमादाय समन्वयसम्भवात्, न च विशिष्टसाध्यकव्यभिचारिणि महानसीयवह्निमान् धूमादित्यत्र वह्निधूमोभयवान् वह्नेरित्यत्र व्यभिचारिणि च वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वाभावेन साध्याभावयोरघटकत्वेन द्रव्यत्वाद्यभावानां लक्षणघटकत्वेपि तद्वन्निरूपिततवृत्तित्वाभावस्य निरुक्तहेत्वोरक्षतत्वेन च अतिव्याप्तिसम्भव इति वाच्यम्, आद्यस्थले पर्वतभेदाभावरूपं द्वितीयस्थलेऽयोगोलकभेदाभावरूपञ्च व्यभिचारनिरूपकान्यत्वाभावं धूमाभावञ्चादायातिव्याप्तिवारणात्, नच निरूक्तप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोः निवेशे गौरवमिति वाच्यम्, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य लक्षणघटकसाध्याभावपदेन विवक्षणीयत्वात्, वह्निमान् धूमादित्यादौ घटादिवृत्तित्वविष्टिद्रव्यत्वत्वघटत्वद्रव्यत्वोभयत्वयोः साध्यव्यापकतावच्छेदकत्वाभावेन न तादृशाभावमानादायाव्याप्तिप्रसक्तिः ॥

यदि साध्यव्यापकतावच्छेदकद्रव्यत्वत्वावच्छिन्नप्रतियोगिताकनिरुक्तवैशिष्ट्याभावोभयाभावादिकमादाय पुनरप्यव्याप्तिस्सम्भाव्यते तदा साध्याधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तद्रूपावृत्तिप्रतियोगिताकाभावस्य विवक्षणीयत्वेन दोषाभावात्

एवञ्च प्रमेयवह्निमान् धूमादित्यत्र वह्निसामान्याभावं कम्बुग्रीवादिमत्त्वान् घटत्वादित्यत्र घटभेदञ्चादाय समन्वयसम्भवात्। नच अत्र व्यापकत्वकुक्षौ प्रतियोगिवैयधिकरण्यप्रवेशे प्रयोजनविरहेण कपिसंयोगाभावस्य लक्षणाघटकतया उक्तस्त्र कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिदानमसङ्गतमिति वाच्यम्, तद्ग्रन्थस्याययाश्रुतसाध्याभावघटितलक्षणाभिप्रायकत्वात्। नच ज्ञेयत्वत्त्वेन वाच्यत्वं नास्तीतिप्रतीतिसिद्धाभावस्यापि एतादृशसाध्याभावरूपतया तदधिकरणस्य जगतः, प्रसिद्धत्वेन वाच्यं ज्ञेयत्वादित्यादित्यादिकेवलान्वयिसाध्यकस्थले साध्याभावाप्रसिद्धिनिबन्धनाव्याप्तिप्रदर्शनमसङ्गतमिति वाच्यम्, अत्र ग्रन्थे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रसक्त्यभावेन साध्यसामान्याभावस्याप्रसिद्धतया वक्ष्यमाणग्रन्थोपपत्तेः ।।

ननु तथापि गुणत्ववान् ज्ञानत्वात् सत्त्ववान् जातेरित्यादौ विषयताव्याप्यत्वादिसम्बन्धेन तादृशसाध्याभाववति ज्ञानादौ ज्ञानत्वादेर्वर्तमानत्वाद्व्याप्तिः । नच साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषेण विवक्षितमिति वाच्यम्, तथासति घटत्वात्यन्ताभाववान् घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभावस्य घटत्वादेः विशेषणताविशेष सम्बन्धेनाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरेतिचेन्न, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्य सामान्यीय प्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वस्य विवक्षितत्वात्। वृत्त्यन्तं प्रतियोगिताविशेषणम् । तादृशसम्बन्धो वह्निमान् धूमादित्यादिभावसाध्यकस्थले विशेषणताविशेषएव । घटत्वाभाववान् पटत्वादित्याद्यभावसाध्यकस्थले तु समवायादिरेव । समवायविषयत्वादिसम्बन्धेन प्रमेयत्वादिसाध्यकज्ञानत्वादिहेतौ साध्यतावच्छेदकसमवायादिसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाद्यभावस्य कालिकसम्बन्धेन योऽभावस्सोपिप्रमेयतया साध्यान्तर्गतः, तदीयप्रतियोगितावच्छेदककालिकादिसम्बन्धेन साध्याभावाधिकरणे ज्ञानत्वादेर्वृत्तेरव्याप्तिवारणाय सामान्यपदोपादानम् । साध्यसामान्यीयत्वञ्चयावत्साध्यनिरूपितत्वम्, स्वानिरूपकसाध्यकभिन्नत्वमिति यावत् । अस्यैकोक्तिमात्रतया गौरवस्यादोषत्वात् । कारणतावच्छेदके च भावसाध्यकस्थलेऽभावीयविशेषणताविशेषेण साध्याभावाधिकरणत्वम्, अभावसाध्यकस्थले च यथायथम् समवायादिसम्बन्धेन साध्याभावाधिकरणत्वमुपादेयम्, साध्यभेदेन कार्यकारणभावभेदात् ।।

गुणत्ववान् ज्ञानत्वादिति गुणत्वाभावरूपसाध्याभावनिष्ठविषयतानिरूपकत्व सम्बन्धावच्छिन्नाधेयता निरूपिताधिकरणतावद्ज्ञाननिरूपितवृत्तित्वस्य गुणत्वाभावनिष्ठाव्याप्यत्व (व्यभिचारित्व) सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्ज्ञान-

सत्त्वादव्याप्तिः। तथाहि- अव्याप्यत्वं व्याप्यत्वाभावः, वृत्तित्वस्य च ज्ञानत्वहेतो सत्त्वादव्याप्तिः। तथाहि- अव्याप्यत्वं तदभाववदवृत्तित्वाभावरूपं भवति, व्याप्यत्वस्य तदभाववदवृत्तित्वरूपत्वेन अव्याप्यत्वं तदभाववदवृत्तित्वाभावरूपं भवति, तादृशावृत्तित्वाभावस्य तादृशवृत्तित्वरूपत्वेन व्यभिचाररूपं भवति, तथाच गुणत्वाभावनिष्ठस्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावत् ज्ञानं भवति, तथाहि, स्वपदेन गुणत्वाभावो ग्राह्यः, स्वाभावः गुणत्वाभावाभावः गुणत्वरूपः तदधिकरणं ज्ञानं तन्निरूपिततादात्म्य सम्बन्धावच्छिन्नवृत्तित्वं ज्ञाने वर्तते इति स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नगुणत्वाभावनिष्ठाधेयता निरूपिताधिकरणतावद्ज्ञाननिरूपितवृत्तित्वस्य ज्ञानत्वहेतौ सत्त्वादव्याप्तिरिति भावः।।

सत्तावान् जातेरिति। सत्ताऽभावरूपसाध्याभावनिष्ठविषयतासम्बन्धावच्छिन्नाधेयतानिरूपितताधिकरणतावत्सत्ताभावविषयकज्ञाननिरूपितवृत्तित्वस्य सत्ताऽभावनिष्ठाव्याप्यत्वरूपस्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्ज्ञानादिनिरूपितवृत्तित्वस्य जातिरूपहेतौ सत्त्वादव्याप्तिः तथाहि- स्वं सत्ताऽभावः, स्वाभावः सत्ताऽभावाभावः सत्तास्वरूपः, तदधिकरणमात्मा, तन्निरूपितवृत्तित्वं ज्ञानेच्छादौ वर्तत इति भावः। नच पर्वतो वह्निमान् धूमादित्यादावेव कालिकसम्बन्धावच्छिन्नसाध्याभावाधिकरणपर्वतादिवृत्तितामादायऽव्याप्तिसम्भवे गुणत्ववान् ज्ञानत्वादित्यादिस्थलान्तरानुसरणं व्यर्थमिति वाच्यम्, जन्यानां कालोपाधित्वनियमानङ्गीकाराभिप्रायेण स्थलान्तरस्यानुसृतत्वात् ।।

नच गुणत्वान् ज्ञानत्वादित्रापि निरुक्तरीत्या विषयतासम्बन्धमादायाव्याप्तिसम्भवेऽव्याप्यत्वसम्बन्ध पर्यन्तानुसरणं व्यर्थमेवेति वाच्यम्, विषयतासम्बन्धस्य वृत्त्यनियामकतावादिनये तत्सम्बन्धावच्छिन्नाधेयताया अप्रसिद्धत्वेन न तमादायाव्याप्तिस्सम्भवतीति अव्याप्यत्वसम्बन्धपर्यन्तस्यानुसृतत्वात् । नच स्वाभाववद्वृत्तित्वस्य परम्परासम्बन्धतया न तस्यापि वृत्तिनियामकत्वमिति वाच्यम्, इहोपाधिः नेहोपाधिरिति प्रतीत्याऽव्याप्यत्व सम्बन्धस्य वृत्तिनियामकत्वस्यावश्यमङ्गीकर्तव्यत्वात्, तथाहि- इह धूमवान् वह्निरित्यत्र वह्निरूपहेतौ स्वाभाववद्वृत्तित्वसम्बन्धेनार्द्रेन्धनसंयोगरूपोपाधिः वर्तते, इह वह्निमान्धूमादित्यत्र धूमरूपहेतौ नोपाधिः निरुक्तसम्बन्धेन उपाधिः आर्द्रेन्धनसंयोगरूपो न वर्तते इत्यर्थः । तथाच इहोपाधिरितिप्रतीत्या तादृशसम्बन्धावच्छिन्नोपाधित्वावच्छिन्नाधेयताऽङ्गीकर्तव्या, कथञ्चिदेतत्प्रतीतौ तत्सम्बन्धावच्चिछन्नसम्बद्धताया विषयत्वाङ्गीकारेपि नेहोपाधिरितिप्रतीत्या तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तद्विषयत्वस्याङ्गीकर्तव्यतया अस्य वृत्यनियामकत्वे तत्प्रतीतेः भ्रमत्वस्यानिवार्यतया तस्याः प्रमात्वानुरोधेन तत्सम्बधस्य वृत्तिनियामकत्वस्य स्वीकार्यत्वात् ।।

नच तथापि गुणत्ववान् ज्ञानत्वादित्यत्राव्याप्तिसम्भवे सत्तावान् जातेरिति स्थलान्तरानुसरणे किं वीजमिति वाच्यम्, तत्र साध्याभावनिष्ठवृत्त्यनियामकविषयतासम्बन्धावच्छिन्नाधेयताया अप्रसिद्धत्वेन स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नायास्तस्याप्रसिद्धत्वेपि अत्र स्वाभाववद्वृत्तिताया वृत्त्यनियामकतादात्म्यसम्बन्धावच्छिन्नाया एव ज्ञाने वर्तमानतया तादृशतादात्म्यसम्बन्धावच्छिन्नवृत्तिताघटितस्वाभाववद्वृत्तित्वसम्बन्धस्यापि वृत्त्यनियामकसम्बन्धघटितत्वेन वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नसाध्याभावनिष्ठाधेयताया अप्रसिद्धत्वेन अत्राव्याप्तेरसम्भवेनसत्तावान् जातेरिति स्थलान्तरानुसरणस्य युक्तत्वात्। सत्तावांञ्जातेरित्यत्र तु स्वपदग्राह्यसत्ताऽभावस्य योऽभावस्सत्तारूपः तदधिकरणे आत्मनिज्ञानस्य समवायसम्बन्धेनैव विद्यमानतयावृत्तिनियामकसमवायसम्बन्धावच्छिन्नवृत्तिताघटितस्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्नाधेयतायाः प्रसिद्धत्वेन तत्सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावति आत्मनि जातेस्त्वेनाव्याप्तेरूपपन्नत्वात्॥

**अभावीयविशेषणताविशेषेणेति**। साध्याभावनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेतु गुणत्वाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावति द्रव्यादौ ज्ञानत्वस्याविद्यमानतया गुणत्ववान् ज्ञानत्वादित्यत्र नाव्याप्तिस्समन्वयश्च। सत्तावान् जातेरित्यत्रतु स्वरूपसम्बन्धेन सत्ताऽभावाधिकरणे सामान्यादौ जातेरवर्तमानतया नाव्याप्तिः। नच तत्र साध्याभावाधिकरणसामान्यादिनिरूपितहेतुतावच्छेदक सम्बन्धावच्छिन्नवृत्तिताया अप्रसिद्ध्याऽव्याप्तिस्तदवस्थैवेति वाच्यम्, मधुरानाथेन तस्या उत्तरत्र वक्ष्यमाणत्वात्। **घटत्वात्यन्ताभाववानिति**। साध्याभावनिष्ठाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वस्यनिवेशे घटत्वात्यन्ताभाववान् घटभिन्नं वा पटत्वादित्यत्र घटत्वाभावाभावात्मकस्य घटभेदाभावात्मकस्य घटत्त्वरूपस्य साध्याभावस्य स्वरूपसम्बन्धेनाधिकरणाप्रसिद्ध्याऽव्याप्तिरिति भावः॥

**साध्याभाववृत्तिसाध्यसामान्यीयेति**। नच समवायसम्बन्धेन साध्याभावाधिकरणत्वनिवेशेनैव पूर्वोक्तदोषवारणसम्भवात् एतादृशगुरुतरसम्बन्धानुसरणं व्यर्थमिति वाच्यम्, वह्निमान्धूमादित्यत्राव्याप्तेः, समवायेनवह्न्यभावाधिकरणत्वस्याप्रसिद्धत्वात्। नच स्वरूपसमवायान्यतरसम्बन्धेन साध्याभावस्याधिकरणत्वविवक्षणेनैव निरुक्तदोषवारणसम्भवे इति वाच्यम्, तथासत्यपि आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावाभावसाध्यकात्मत्वहेतुके आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपस्य साध्याभावस्य निरुक्तान्यतरान्तर्गतेन (अन्यतमान्तर्गतेन) स्वरूपसम्बन्धेन अधिकरणे आत्मनि हेतोरात्मत्वस्य वृत्तेरुक्तकल्पस्य शंकितुमशंक्यत्वात्। तन्निवेशेतु

भावसाध्यकस्थलेस्वरूपसम्बन्धएव तादृश इति नाव्याप्तिः। अभावसाध्यकस्थले तादात्म्यातिरिक्तयद्यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावानां साध्यत्वं तेषामेव सम्बन्धानां प्रायशस्तत्रतत्र साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदक-सम्बन्धरूपत्वेन तेन तेन सम्बन्धेन साध्याभावाधिकरणत्वप्रसिद्ध्या तत्र तत्र नाव्याप्तिः। तथाहि- वह्निमान् धूमादित्यत्र समन्वयप्रकार इत्थम्, साध्याभावो-वह्न्यभावः तद्वृत्तिः साध्यसामान्यीया या प्रतियोगिता वह्न्यभावनिष्ठा वह्न्यभावा-भावात्मकवह्निसामान्यीया प्रतियोगिता, तत्प्रतियोगितावच्छेदकसम्बन्धस्वरूपसम्बन्धो भवति, तेन सम्बन्धेन साध्याभावाधिकरणस्य प्रसिद्धत्वान्नाव्याप्तिः॥

घटत्वात्यन्ताभाववान् पटत्वावदित्यत्र घटत्वरूपसाध्याभाववृत्तिः प्रतियोगिता घटत्वत्वावच्छिन्नप्रतियोगिताकाभावरूपसाध्यसामान्यनिरूपिता समवायसम्बन्धा-वच्छिन्ना प्रतियोगिताभवति, तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन घटत्वरूप-साध्याभावाधिकरणस्य प्रसिद्ध्या नाव्याप्तिः। घटभिन्नं पटत्वादित्यत्र साध्याभावा घटभेदाभावो घटत्वरूपः समनैयत्यात्, तद्वृत्तिः साध्यसामान्यीया या प्रतियोगि-तेत्युक्तौ घटभेदरूपसाध्यसामान्यनिरूपिता प्रतियोगिता न भवति, तदीयप्रति-योगिताया घटएव सत्त्वात् किन्तु तदभावाभावस्य तत्स्वरूपत्वन्यायेन घटभेदस्य घटभेदाभावाभावरूपत्वेन साध्यसामान्यपदेन घटभेदाभावो ग्राह्यः, तथाच घट-भेदाभावस्य घटत्वरूपतया साध्याभावात्मकघटत्वनिष्ठप्रतियोगितायाः समवाय-सम्बन्धावच्छिन्नतया तत्प्रतियोगितावच्छेदकसमवायसम्बन्धेन लक्षणघटकघटत्व-रूपसाध्याभावाधिकरणघटनिरूपितवृत्तित्वाभावस्य हेतौ सत्वात्समन्वयः। एवमन्य-त्रापि साध्याभावाधिकरणप्रसिद्ध्या ना व्याप्तिः॥

वृत्यन्तं प्रतियोगिताविशेषणमिति साध्याभाववृत्तित्वं साध्यसामान्यीय-प्रतियोगिताविशेषणं भवतीत्यर्थः। साध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वा-भावे आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्न प्रतियोगिता-काभावस्य स्वरूपसम्बन्धेन साध्यतायां आत्मत्वस्य हेतुतायामव्याप्तिः (आत्मत्व-प्रकारप्रमाविशेष्यत्वं कालिकेन जन्ये वर्तते, जन्यानां कालोपाधित्वमितिन्यायात्, तत्कालिकेन नास्तीत्याकारकप्रतीतिसिद्धाभावः आत्मनि वर्तते, नित्येषु कालिका-योगइतिन्यायात्, अतस्साधनाश्रये साध्यसद्भावेनास्य हेतोस्सद्धेतुत्वमुपपद्यते) तथाहि आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाव-त्वावच्छिन्न कालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धा-वच्छिन्नप्रतियोगिताकाभावः आत्मत्वप्रकारक प्रमाविशेष्यतात्वावच्छिन्नकालिक-

सम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिक सम्बन्धावच्छिन्नप्रतियोगिताकाभावश्च आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपसाध्यरूप एव, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्य स्वप्रतियोगिरूपत्वमिति नियमात्, नतुसमनैयत्यात्साध्यरूपत्वं निरुक्तस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपस्य प्रथमाभावस्य सम्भवति, अत्र साध्यस्य नित्यएव वर्तमानत्वेन तत्र साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव स्वरूपसम्बन्धेन सत्वेन तन्निष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्रासत्वात् ॥

स्वप्रतियोगिमत्ताग्रहविरोधीताघटकेत्यत्र स्वपदं यत्प्रतियोगिताकाभावस्य तत्प्रतियोगिरूपत्वमुपपाद्यते तत्परं ग्राह्यम् यथा, संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्न प्रतियोगिताकाभाभावस्य घटरूपत्वे उपपादनीये संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्न प्रतियोगिताकाभावः स्वपदेन ग्राह्यः, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धो नाम स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्ध इत्यर्थः, स्वपदेन संयोगेन घटाभावस्य परिग्रहणे स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्ना या प्रतिबध्यता संयोग सम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपित किञ्चिद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, तन्निरूपिताया प्रतिबन्धकता संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तदवच्छेदकप्रकारतावच्छेदकसम्बन्धः स्वरूपसम्बन्धः, तत्सम्बन्धावच्छिन्नघटाभावत्वावच्छिन्नप्रतियोगिताकाभावो घटस्वरूप इत्यर्थः। तथाच आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूप साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्न स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यरूप एव, तस्य स्वपदग्राह्यसाध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाव प्रतियोगिमत्ताग्रहविरोधिताघटकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपत्वात्, कालिकसम्बन्धेन तादृशसाध्यवानिति बुद्धिं प्रतितादृशसाध्यं कालिकेन नास्तीतिप्रतीतिसिद्धाभावस्य स्वरूपसम्बन्धेन निश्चयस्यैव प्रतिबन्धकत्वात्। एवं तादृश साध्यनिष्ठस्वरूपसम्ब-

न्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावोपि तादृशसाध्यरूपएव, स्वरूप सम्बन्धेन तादृशसाध्यवानिति बुद्धिं प्रति तादृशसाध्यं स्वरूपसम्बन्धेन नास्तीत्याकारकप्रतीतिसिद्धाभावस्य कालिकसम्बन्धेननिश्चयस्यैव प्रतिबन्धकत्वात्, तस्य स्वपदग्राह्यसाध्यनिष्ठस्वरूपसम्बन्धावच्छिन्न प्रतियोगिताकाभावप्रतियोगिमत्ताग्रहविरोधिताघटककालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावरूपत्वात्। तथाच साध्यसामान्यपदेन साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावपरिग्रहणे तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभावनिष्ठाधेयतानिरूपिताधिकरणतावदात्मनिरूपितवृत्तित्वस्य आत्मत्वहेतौ सत्त्वादव्याप्तिरिति। साध्याभाववृत्तित्वस्य साध्यसामान्यीयप्रतियोगितायां विशेषणत्वाङ्गीकारे तु साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगितायाः साध्याभाववृत्तित्वाभावान्नाव्याप्तिः ॥

नच साध्यनिष्ठकालिकसम्बन्धावच्छिंन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताया अपि साध्याभाववृत्तित्वादव्याप्ति तदवस्थैवेति वाच्यम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वाङ्गीकारात्, निरुक्तस्वरूपसम्बन्धावच्छिन्न प्रतियोगितायाः आत्मत्वप्रकारकप्रमाविशेष्यत्वानात्मकसाध्यनिष्ठकालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभाववृत्तित्वेन तदात्मकसाध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव वृत्तित्वाभावेन साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितापदेन न स्वरूपसम्बन्धावच्छिन्ना पूर्वगृहीता प्रतियोगिता धर्तुं शक्यते, किन्तु आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावीया कालिकसम्बन्धावच्छिन्नाप्रतियोगितैव आत्मत्वप्रकारकप्रमाविशेष्यत्वात्मकसाध्याभावनिष्ठा ग्राह्या, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभावाधिकरणजन्यनिरूपितवृत्तित्वाभावस्य आत्मत्वहेतौ सत्त्वान्नाव्याप्तिः। तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य साध्यनिष्ठप्रतियोगिता यामनिवेशेऽयमेव दोषस्सम्भवतीति ॥

अत्र साध्यतावच्छेदकसम्बन्धावछिन्नत्वञ्च साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वे सति साध्यतानिरूपितसंसर्गतावच्छेदका-

---

दशमकल्पे। नन्वत्र कल्पे घटभिन्नं कपालत्वादित्यत्राव्याप्तिः, तथाहि, साध्याभाववृत्तिसाध्यसामान्यीयात्यन्ताभावत्वनिरूपितप्रतियोगितावच्छेदकसमवाय

तिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वरूपं ग्राह्यम्, अत्र न्यूनवारकपर्याप्त्यनिवेशे अतीतघटत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तद्धटानुयोगिकस्वरूपसम्बन्धेन साध्यतायातद्घटत्वस्य हेतुतायामव्याप्तिः, (तद्धटत्वमतीतघटासमानकालिकघटवृत्ति ग्राह्यम्) तथाहि, सम्बन्धघटकसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावपेदन अतीतघटस्वरूपः अतीतघटत्वावच्छिन्नकालिकसम्बन्धावच्छिन्न प्रतियोगिता काभावत्वावच्छिन्नशुद्धस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावो गृह्यते, तद्वृत्तिः साध्यसा मान्यीया या प्रतियोगितेत्युक्तौ अतीतघटत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताका भावरूपसाध्य सामान्यीयाकालिकसम्बन्धावच्छिन्ना प्रतियोगिता गृह्यते, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन अतीतघटत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नतद्धटानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपस्यातिरिक्तस्य लक्षणघटक साध्याभावस्याधिकरणे तद्धटे तद्धटत्व हेतोर्वृत्तेः! न्यूनवारकपर्याप्तिनिवेशेतु अतीतिघटः कालिकेन नास्तीत्यभावस्य तद्धटानुयोगिकस्वरूपसम्बन्धेनाभावस्य अतीतघटानात्मकस्यैव सम्बन्धघटकसाध्याभावरूपतया तत्र निरुक्तसाध्यसामान्यीयप्रतियोगिताया असत्त्वेन तादृशसाध्यसामान्यीयप्रतियोगितापदेन अतीतघटस्य कालिकेन योऽभावः तस्य तद्धटानुयोगिकस्वरूपेण योऽभावः तस्य स्वरूपेण योऽभावः तदीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताया एव ग्राह्यतया तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन लक्षणघटकस्यातिरिक्तस्य साध्याभावस्याधिकरणेऽतीतघटादौ तद्धटत्वहेतोरसत्त्वान्नाव्याप्तिः ॥

---

सम्बन्धेन (घटभेदाभावस्य घटरूपत्वं घटत्वरूपत्वञ्चाङ्गीक्रियते) घटरूपसाध्याभावाधिकरणे कपाले कपालत्वस्य हेतोर्वृत्तेः इतिचैन्न, स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वसामानाधिकरण्योभयसम्बन्धेन निरुक्तसाध्यीयप्रतियोगितावैशिष्टस्य लक्षणघटकसाध्याभावत्वावच्छिन्नाधेयतायां निवेशनीयत्वात्, तन्निवेशेच तादृशप्रतियोगितापदेन घटभेदाभावाभावीयघटत्वनिष्ठसमवायसम्बन्धावच्छिन्न प्रतियोगितायाः परिग्रहणे स्वसामानाधिकरण्यघटितनिरुक्तसम्बन्धद्वयेन तद्विशिष्टाऽधेयता घटत्वनिष्ठैव ग्राह्येति नाव्याप्तिः ॥ अथवा साध्यनिष्ठं यत्साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्न प्रतियोगिताकाभावत्वरूपात्यन्ताभावत्वरूपानुयोगित्वं तन्निरूपित प्रतियोगिताश्रयो यस्यासाध्याभावः तद्वन्निरूपितवृत्तित्वाभावो व्याप्तिरिति परिष्कारे घटत्वरूपसाध्याभावस्यैव तादृशात्यन्ताभावत्व-

अत्र साध्यतानिरूपितसंसर्गतावच्छेदकतेतरावारकपर्याप्त्यनिवेशे आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायामात्मत्वस्य हेतुतायामव्याप्तिः, तथाहि– अत्र सम्बन्धघटकसाध्याभावपदेन आत्मत्वप्रकारकप्रमाविशेष्यतात्वावछिन्नकालिकसम्बन्धावछिन्नप्रतियोगिताकाभावत्वावच्छिन्नात्मानुयोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपोऽतिरिक्तसाध्याभावो गृह्यते, तद्वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन आत्मत्वप्रकारकप्रमाविशेष्यत्वस्य कालिकेन योऽभावः तस्य आत्मानुयोगिकस्वरूपेणयोऽभावः तस्य स्वरूपेण योऽभावः तदीया स्वरूपसम्बन्धावच्छिन्ना प्रतियोगिता गृह्यते, तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन आत्मत्वप्रकारकप्रमाविशेष्यत्वात्मकस्य लक्षणघटकस्य साध्याभावस्याधिकरणे आत्मनि आत्मत्वहेतोस्सत्त्वादिति। इतरबारकपर्याप्तिनिवेशे तु आत्मत्वप्रकारकप्रमाविशेष्यत्वस्य कालिकेन योऽभावः तस्य स्वरूपेणाभाव एव आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपः सम्बन्धघटकसाध्याभावपदेन ग्राह्यः, तद् वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन आत्मत्वप्रकारकप्रमाविशेष्यत्वस्यकालिकेन योऽभावः तदीया कालिकसम्बन्धावच्छिन्ना प्रतियोगितैव ग्राह्या, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन लक्षणघटकसाध्याभावाधिकरणे जन्येत्मवहेतोरवृत्तः नाव्याप्तिः ॥

---

निरूपितप्रतियोगिताश्रयत्वेन न तत्राव्याप्तिः॥

ननु साध्याभाववदवृत्तित्वलक्षणस्य वह्निमान् धूमादित्यादावव्याप्तिः। तथाहि-साध्याभावाधिकरणं धूमाधिकरणता, तन्निरूपितवृत्तित्वं धूमे वर्तते, अधिकरणनिरूपितत्ववत् अधिकरणतानिरूपितत्वस्याप्याधेयतायामङ्गीकृतत्वात् इतिचेन्न, साध्याभावाधिकणनिष्ठाधिकरणतानिरूपितत्वस्याधेयतायां विवक्षणेनाव्याप्त्यभावात्, "अधिकरणनिरूपितत्ववदधिकरणतानिरूपितत्वस्याप्याधेयतायां सर्वसम्मतत्वादिति, नियमानुसारेण धूमाधिकरणनिरूपितत्वधूमाधिकरणतानिरूपितत्वयोः धूमनिष्ठाधेयतायां सत्त्वेपि धूमाधिकरणतानिष्ठाधिकरणतानिरूपितत्वस्य तत्राभावान्नाव्याप्तिः। नचैवमपि घटभिन्नं घटत्वाधिकरणतात्वादित्यत्राव्याप्तिः, तथाहि-साध्यभावाधिकरणं घटः, तन्निष्ठाऽधिकरणता घटत्वाधिकरणता, तन्निरूपिता वृतिता हेतौवर्ततइतिचेन्न। स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेन साध्याभावाधिकरणविशिष्टं यदाधेयत्वं तदभावोव्याप्तिरित्युच्यते, अत्र हेतुरूपघटत्वाधिकरणतात्वनिष्ठाधेयतायां घटत्वाधिकरणतानिरूपितत्वस्य सत्त्वेपि साध्या-

एवं सम्बन्धघटकसाध्याभावीयंप्रतियोगितायां साध्यतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयं निवेशनीयम्। अत्र न्यूनवारकपर्याप्त्यनिवेशे अभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावस्य कालिकेन साध्यतायां जन्यत्वहेतावव्याप्तेः, तथाहि- सम्बन्धघटकसाध्याभावपदेन साध्यतावच्छेदकैकदेशाभावत्वमात्रावच्छिन्नप्रतियोगिताकः अभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो गृह्यते, तद्वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन अभावस्य कालिकेन योऽभावः तस्य कालिकेन योऽभावः तद्रूपप्रकृतसाध्यसामान्यंनिरूपिता कालिकसम्वन्धावच्छिन्ना प्रतियोगिता गृह्यते, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन लक्षणघटकसाध्याभावरूपस्य अभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकालिकासम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य अधिकरणे जन्ये जन्यत्वस्य सत्त्वात्। न्यूनवारकपर्याप्तिनिवेशे तु सम्बन्धघटकसाध्यावत्व पदे न अभावस्य कालिकेन योऽभावः तस्य कालिकेन योऽभावः तस्य कालिकेनाभावो ग्राह्यः, तद्वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन अभावस्य कालिकेन योऽभावः यस्य कालिकेन योऽभावः तस्य कालिकेन योऽभावः तस्य स्व-

---

भावाधिकरणघटनिरूपितत्वस्याभावान्नाव्याप्तिः ॥

ननु सम्बन्धघटकसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे विशेष्यत्वस्य कालिकसम्बन्धेनाभावस्य स्वरूपेण साध्यतायां आत्मत्वहेतादव्याप्तिसम्भवे आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावपर्यन्तानुसरणं मूलकृता कथं कृतमितिचेन्न, साध्याभाववृत्तिसाध्यसामानाधिकरण्यनियोगितावच्छेदकसम्बन्धंसामान्येन साध्याभावाधिकरणत्वप्रवेशे तत्र अव्याप्त्यभावात्, तथाहि- तादृशसम्बन्धसामान्यसंसर्गताकालिकस्वरूपोभयसम्बन्धेन विशेष्यतारूपसाध्याभावाधिकरणे महाकाले आत्मत्वस्यावृत्तेः। आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावसाधनेतु निरुक्तसम्बन्धद्वयेनात्मत्वप्रकारकप्रमाविशेष्यात्वरूपसाध्याभावस्याधिकरणाप्रसिद्ध्याऽव्याप्तिस्सङ्गच्छते। एतदर्थमेव प्रमापदञ्चोपात्तम्। नच तादृशसम्बन्धसामान्येन साध्याभावाधिकरणत्त्वप्रवेशे प्रयोजनविरहेण केवलविशेष्यत्वाभावसाध्यकस्थलेप्यव्याप्तिस्सङ्गच्छतएवेति वाच्यम्, घटभिन्नं कपालत्वादित्यत्र अव्याप्तिः, तथाहि- घटत्वरूपसाध्याभावनिष्ठतादृशप्रतियोगितावच्छेदकसमवायसम्बन्धेन घटरूपसाध्याभावाधिकरणे कपाले कपालत्वहेतोर्वृत्तेः। तादृशप्रतियोगितावच्छेदक-

रूपेण योऽभावः तदीया स्वरूपसम्बन्धावच्छिन्ना प्रतियोगिता ग्राह्या, तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन पूर्वनिर्दिष्टस्य लक्षणघटक साध्याभावस्याधिकरणे नित्ये जन्यत्वहेतोरवृत्त्यान्नाव्याप्तिः ॥

साध्यतावच्छेदकतेतरवारकपर्याप्त्यनिवेशे आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभास्य स्वरूपसम्बन्धेन साध्यतायां आत्मत्वहेतावव्याप्तिः, तथाहि- सम्बन्धघटकसाध्याभावपदेन अतिरिक्तः आत्मवृत्तित्वविशिष्टो यः आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिक सम्बन्धावच्छिन्नप्रतियोगिताकाभावः तस्यस्वस्वरूपेणभावो गृह्यते, तद्वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन आत्मवृत्तित्वविशिष्टो यः आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावः तस्य स्वरूपेण योऽभावः तस्य स्वरूपेण योऽभावः तदीया स्वरूपसम्बन्धावच्छिन्ना प्रतियोगिता गृह्यते, तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन आत्मत्वप्रकारक प्रमाविशेष्यत्वात्मकसाध्याभावाधिकरणे आत्मनि आत्मत्वहेतोर्वृत्तेः। इतरवारकपर्याप्तिनिवेशेतु सम्बन्धघटकसाध्याभावपदेन आत्मत्वप्रकारकप्रमाविशेष्यतारूपः

---

सम्बन्धसामान्येन साध्याभावाधिकरणत्वप्रवेशने तु घटरूपसाध्याभाववृत्तिप्रकृतसाध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धोपि तादृशसम्बन्धसामान्यान्तर्गत इति निरुक्तप्रतियोगितावच्छेदकसमवायतादात्म्योभयसम्बन्धेन साध्याभाववतिघटे पटत्वस्यावृत्तेरव्याप्त्यनवकाशात्। नचैवं घटभिन्नं घटत्वत्वादित्यत्रापि निरुक्तसम्बन्धद्वयेन साध्याभावाधिकरणे घटत्वत्वस्यावृत्तेरव्याप्तेः वारणात् अत्यन्ताभावत्वनिरूपितत्वस्य प्रतियोगिताविशेषणत्वमनावश्यकमिति वाच्यम्, कालिकेन घटवान् महाकालत्वादत्यित्रा व्याप्तेः, घटवद्भिन्नभेदस्य घटस्वरूपतया एतादृशसाध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धोपि तादृशसम्बन्धसामान्यान्तर्गत इति तादृशसाध्यसामान्यीयप्रतियोगितावच्छेदकस्वरूपतादात्म्योभयसम्बन्धेन साध्याभावाधिकरणस्याप्रसिद्ध्याऽव्याप्तिवारणाय अत्यन्ताभावत्वनिरूपितत्वस्यावश्यकत्वात् ॥

साध्याभाववाकत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वघटिततथाश्रुत व्याप्तेरनुगमप्रकारः। साध्यावच्छेदकविशिष्टान्यत्वं व्याप्तिः साध्यतावच्छेदक वैशिष्ट्यञ्च स्वविशिष्टाधेयताविशिष्टत्वसम्बन्धेन, आधेयतावैशिष्ट्यञ्चस्वनिरूपितनिरवच्छिन्नाधिकरणतावन्निरूपित वृत्तित्वसम्बन्धेन आधेयतायां स्ववैशिष्ट्यञ्च स्वविशिष्टप्रतियोगिताविशिष्टत्व स्वविशिष्टप्रतियोगिताकाभावविशिष्टत्वोभयसम्बन्धेन

साध्याभावएव ग्राह्य:, तद्वृत्तिसाध्यसामान्यीयप्रतियोगितापदेन आत्मत्व प्रकारक-प्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रकृत-साध्यसामान्यीया प्रतियोगितैव ग्राह्या, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभावाधिकरणे जन्ये आत्मत्वस्य अवृत्त्या नाव्याप्ति: ॥

**समवायविषयत्वादिसम्बन्धेनेति** । साध्यसामान्यीयेत्यत्र सामान्यपदाभावे समवायसम्बन्धेन प्रमेयवान् ज्ञानत्वादित्यत्राव्याप्ति: तथाहि– सम्बन्धघटकसाध्याभाव: समवायसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभाव:, तद्वृत्ति: साध्यीयाया प्रतियोगितेत्युक्तौ प्रमेयमात्रस्यात्र साध्यत्वेन सर्वस्यापि पदार्थस्य साध्यतावच्छेदकप्रमेयत्वधर्माक्रान्ततया समवायसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्न कालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावरूपसाध्यविशेषनिरूपिताकालिकसम्बन्धावच्छिन्ना प्रतियोगिता गृह्यते, तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन समवायसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावरूपलक्षणघटकसाध्याभावाधिकरणे जन्यज्ञाने ज्ञानत्वस्य वृत्ते:। एवं विषयतासम्बन्धेनप्रमेयसाध्यकज्ञानत्वहेतावपि साध्याभावत्वावच्छिन्नकालिकविषयतासम्बन्धावच्छिन्न प्रतियोगिताकाभावरूपसाध्यविशेषनिरूपितप्रतियोगितामादायाव्याप्ति:। सामान्यपदनिवेशेतु स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्यैव स्वप्रतियोगिसामान्यरूपत्वाङ्गीकारेण प्रमेयाभावनिष्ठकालिकविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावयो: स्वप्रतियोगिप्रतियोगिसामान्यरूपत्वात-

---

आधेयतायां प्रतियोगिता वैशिष्टयञ्च स्वनिरूपकाभावात्ववच्छिन्नत्वसम्बन्धेन, आधेयतायामभाववैशिष्टयञ्चस्ववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदक सम्बन्धावच्छिन्नत्वसम्बन्धेन, उभयत्र प्रतियोगितायां स्ववैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन ग्राह्यम् स्वानिरूपकसाध्यकभिन्नत्वमित्यत्र। निरूपितत्वसंम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यविशिष्टान्यत्वं स्वानिरूपकसाध्यकभिन्नत्वं ज्ञेयम्, वह्निवान्धूमादित्यत्र वह्न्यभावत्वावच्छिन्नप्रतियोगितायां साध्यस्य निरूपितत्वसम्बन्धेन सत्त्वेन तादृशसम्बन्धेनसाध्यविशिष्टान्यत्वं सम्भवति, प्रमेयवान् ज्ञानत्वादित्यत्र प्रमेयाभावत्वावच्छिन्नकालिकादिसम्बन्धावच्छिन्नप्रतियोगितायां घटादिसाध्यस्य निरूपितत्वसम्बन्धेनासत्त्वेन तादृशसम्बन्धेन साध्यविशिष्टत्वस्यैव सत्त्वेन न तां प्रतियोगितामादाय दोष:। नच समवायेन प्रमेयवान् ज्ञानत्वादित्यत्र समनैयत्येन लाघवेन

ङ्गीकारेण साध्यसामान्यपदेन प्रमेयाभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव ग्राह्यतया तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्याभावाधिकरणे सामान्यादौ ज्ञानत्वस्यावृत्तेः नाव्याप्तिः। ननु समवायसम्बन्धेन प्रमेय साध्यकस्थले सामान्यपदव्यावृत्तिमुक्ता विषयतासम्बन्धेन तत्साध्यकस्थलानुसरणे किं वीजमितिचेन्न, साध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तिताश्रयत्वस्य साध्ये विशेषणत्वाङ्गीकारेण-प्रमेयाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताका भावस्यातिरिक्तत्वेन साध्यतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वविरहेणैव तादृशाभावमादाय दोपवारणसम्भवात् सामान्यपदस्य वैयर्थ्यप्रसक्तया विषयतया प्रमेयसाध्यकस्थलानुसरणस्य युक्तत्वात्। विषयतया तत्साध्यकस्थलेतु सर्वस्यापि पदार्थस्य विषयतया कुत्रचित् ज्ञाने विद्यमानतया साध्यतावच्छेदकविषयतासम्बन्धावच्छिन्नवृत्तित्वस्य तादृशसाध्यविशेषरूपाभावेऽप्यक्षततयाऽत्रदोषोपपत्तिः सम्भवति (जन्यानां कालोपाधित्वनियमाङ्गीकारे प्रमेयाभावनिष्ठकालिकसम्बन्धावच्छिन्न प्रतियोगिताकाभावं तन्नियमानङ्गीकारे प्रमेयाभावनिष्ठविषयतासम्बन्धावच्छिन्नप्रतियोगिताकाभावञ्चादाय निरुक्तस्थलेऽव्याप्तिः वक्तव्या। नच तर्हिसाध्याभावनिष्ठवृत्त्यनियामकविषयतासम्बन्धावच्छिन्नाधेयताया अप्रसिद्ध्याऽव्याप्तिदानमसङ्गतमिति वाच्यम्, विषयतासम्बन्धावच्छिन्नघटत्वावच्छिन्न प्रतियोगिताकाभावसाध्यकघटत्वादिहेतुकस्थले साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकविषयतासम्बन्धावच्छिन्नसाध्याभावनिष्ठाधेयताया अप्रसिद्ध्याऽव्याप्तिवारणाय साध्याभावनिष्टसम्बद्धतानिरूपितसम्बन्धिता या एव लक्षणे निवेशनीयतया प्रमेयसाध्यकस्थलेपि प्रमेयाभावनिष्ठविषयतासम्बन्धावच्छिन्नसम्बद्धता निरूपितसम्बन्धितावद्ज्ञाननिरूपितवृत्तित्वस्य ज्ञानत्वे सत्त्वाद्व्याप्त्युपपत्तेः) एतद्रूपवानेतद्रसादित्यत्र साध्ये यावत्त्वाप्रसिद्ध्या-

---

च साध्याभावाभावस्य सत्तारूपत्वकल्पनस्यौचित्येन प्रमेयाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां सत्तात्मकसाध्यनिरूपितत्वस्य सत्त्वेपि घटाद्यात्मकसाध्यनिरूपितत्वस्याभावेन निरुक्तसम्बन्धेन साध्यविशिष्टत्वस्यैव सत्त्वेन अव्याप्तिरिति वाच्यम्, अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति प्रतियोगिसामान्यलक्षणवक्तुराचार्यस्य मतेनैतल्लक्षणस्य कृतत्वेन प्रमेयसामान्यस्य प्रमेयाभावाभावत्वसिद्धेरप्रत्यूहत्वेन निरुक्तरीत्या दोषानवकाशात्। अथवा, साध्यव्यापकानिरूपितं स्वानिरूपकसाध्यकं यत् तदन्यत्वमेव स्वानिरूपकसाध्यकभिन्नत्वं वक्तव्यम्, लाघवेन सत्तायाः प्रमेयाभावाभावरूपत्वाभ्युपगमेपि स्वानिरूपक-

ऽव्याप्तिरित्याशङ्कायामाह । **स्वानिरूपकेति**। स्वानिपरूपकं यत्साध्यं तत्कं यद्यत्स्वं तद्भिन्नत्वमित्यर्थ:। वह्निमान् धूमादित्यादौ स्वपदेन स्वरूपसम्बन्धानवच्छिन्नवह्नयभावत्वावच्छिन्नप्रतियोगित्व घटाभावत्वावच्छिन्नप्रतियोगितात्वादेः परिग्रहणे स्वनिरूपक: स्वरूपसम्बन्धानवच्छिन्नवह्नयभावत्वावच्छिन्नाभाव घटाभावाभावादि:, स्वनिरूपकं यत्साध्यं वह्नयभावाभावात्मकं वह्निरूपं साध्यं, तत्कं यद्यत्स्वं निरुक्तवह्नयभावप्रतियोगित्व घटाभावप्रतियोगित्वादि:, तद्भिन्नत्वं स्वरूपसम्बन्धावच्छिन्नवह्नयभावत्वाच्छिन्नप्रतियोगितायां वर्तते इति समन्यवयो ग्राह्य: (निरूपितत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन साध्यविशिष्टान्या या साध्याभावनिष्ठा प्रतियोगितेत्यनुगमप्रकारो ग्राह्य:) एतद्रूपवानेतद्रसादित्यत्रापि साध्यसामान्यीयप्रतियोगितापदेन एतद्रूपाभावत्वावच्छिन्नप्रतियोगितामादाय समन्वयो ग्राह्य: **गौरवस्यादोषत्वादिति**। व्याप्यहेतुसामान्यलक्षणे साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धप्रवेशेन लक्षणगौरवसम्भवेपि भाव साध्यकानुमितिं प्रति स्वरूपसम्बन्धावच्छिन्नसाध्याभावाधिकरणताघटितव्याप्तिनिर्णयस्य अभावसाध्यकानुमितिं प्रति स्थलभेदेन समवाय संयोगादिसम्बन्धावच्छिन्नसाध्याभावाधिककरणताघटितनिर्णयस्य च कारणत्वमिति कार्यकारणभावाङ्गीकारेण कार्यकारणभावे गौरवाभावेन न कापि क्षतिरित्यभिप्राय:।।

**नच तथापि घटान्योन्याभाववान् पटत्वादित्यन्योन्याभावसाध्यके घटत्वादिरूप साध्याभावे न साध्यीयं प्रतियोगित्वम्, नवा समवायसम्बन्धस्तादवच्छेदक:, तादात्म्यस्यैव तदवच्छेदकत्वात् इत्यव्याप्तिस्तदवस्थैवेति वाच्यम्। अत्यन्ताभावाभावस्य प्रतियोगि रूपत्वेन घटभेदस्य घटभेदात्यन्ताभावत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपतया घटभेदात्यन्ताभावरूपस्य प्रतियोगितावच्छेदकीभूतघटत्वस्यापि समवायसम्बन्धेन घटभेदरूपाभावप्रतियोगित्वात् ।।**

---

घटादिसाध्यकत्वस्य प्रमेयाभावत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां सत्त्वेपि साध्यतावच्छेदकसमवायेन साध्यव्यापकभूता या सत्ता तन्निरूपितत्वस्यैव तत्र सत्त्वेन साध्यव्यापकानिरूपितत्वस्य तत्राभावेन साध्यव्यापकानिरूपितस्वानिरूपकसाध्यकपदेन प्रमेयाभावत्वावच्छिन्नकालिकादिसम्बन्धावच्छिन्नप्रतियोगिताया एव ग्राह्यतया तदन्यस्वरूपसम्बन्धावच्छिन्ननिरुक्तप्रतियोगितामादाय समन्वयसम्भवात्।।

न साध्यीयं प्रतियोगित्वमिति। घटभिन्नं पटत्वादित्यत्र घटभेदाभावरूप-साध्याभावो घटत्वस्वरूपः, समनैयत्यात्। साध्यसामान्यरूपघटभेदप्रतियोगित्व-स्य घट एव सत्त्वेन घटत्वरूपसाध्याभावे न साध्यीयं प्रतियोगित्वं सम्भवतीति भावः। सर्वत्रभेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्वत् भेदप्रतियोगिरूपत्व-स्याप्यङ्गीकृत्वेन घटरूपसाध्याभावे घटभेदरूपसाध्यप्रतियोगित्वस्य सम्भवेन न साध्यीयं प्रतियोगित्वमित्यनुपपन्नमित्यत आह। नवा समवायसम्बन्ध इति। तादात्म्येति। अव्याप्तिरिति। पूर्वोक्तरीत्या घटभेदरूपसाध्यप्रतियोगित्वस्य साध्या-भावे घटस्वरूपे सम्भवेपि तादात्म्यस्यैव तत्प्रतियोगितावच्छेदकसम्बन्धत्वेन तेन सम्बन्धेन घटघटत्वान्यतरात्मक साध्याभावाधिकरणे घटे घटत्वे वा पट-त्वहेतोरवर्तमानतयाऽव्याप्त्यसम्भवेपि घटभिन्नं घटत्वत्वादित्यत्र घटरूपसाध्या-भाववृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटत्वात्मक-साध्याभावाधिकरणे घटत्वे धटत्वत्वहेतोस्सत्त्वादव्याप्तिरिति भावः (घटभेदाभावो घटरूपो घटत्वरूप इति चाभिप्रायः, अत्यन्ताभावस्येति। अत्यन्ताभावाभावस्य अत्यन्ताभावप्रतियोगिरूपत्वाङ्गीकारेण घटभेदाभावाभावस्यापि घटभेदरूप-त्वा-ङ्गीकारेण साध्यसामान्यपदेन घटभेदरूपघटभेदाभावाभावपरिग्रहणे साध्याभावा-त्मकघटभेदाभावरूपघटत्वस्यापि तादृशसाध्यप्रतियोगित्वेन तादृशप्रतियोगि-तावच्छेदकसमवायसम्बन्धेन लक्षणघटकसाध्याभावाधिकरणे घटादौ घटत्वत्वस्या-भावान्नाव्याप्तिरिति भावः। नच सम्बन्धघटकसाध्याभाव पदेन घटरूप-साध्याभावपरिग्रहणे तद्वृत्तिप्रकृतसाध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्ब-न्धेन साध्याभावाधिकरणतामादायाव्याप्तिः तदवस्थैवेति वाच्यम्, उत्तरत्र साध्य-सामान्यीयप्रतियोगितायां अत्यन्ताभावत्वरूपानुयोगितानिरूपितत्वस्य तादात्म्य-सम्बन्धानवच्छिन्नत्वपर्यवसितस्य विशेषणीयतया निरूक्तभेदीयप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वरूपस्य अन्योन्याभावत्वरूपानुयोगितानिरूपितत्वस्य सत्त्वेपि अत्यन्ताभावत्वरूपानुयोगिता निरूपितत्वाभावेन न तां प्रतियोगिता-मादायाव्याप्तिः, अत्यन्ताभावत्वनिरूपितप्रतियोगितायाः परिग्रहणे तदवच्छेद-कत्वस्य समवायएव सत्त्वेन तत्सम्बन्धेन साध्याभावाधिकरणे घटादौ पटत्वघट-त्वत्वादिहेतोरभावेनाव्याप्त्यभावात्॥

**नचान्यत्रात्यन्ताभावाभावस्य प्रतियोगिरूपत्वेपि घटभेदात्यंन्ताभावाभावो न घटभेदस्वरूपः, किन्तु प्रतियोगितावच्छेदकीभूतघटत्वात्यन्ताभावएवेति सिद्धान्त इति वाच्यम्, यथाहि– घटत्वावच्छिन्नघटवत्ताग्रहे घटात्यन्ताभावा-**

ग्रहात् घटात्यन्ताभावाभावव्यवहाराच्च घटात्यन्ताभावाभावो घटस्वरूपः, तथा घटभेदवत्ताग्रहे घटभेदात्यन्ताभावग्रहात् घटभेदात्यन्ताभावाभावव्यवहाराच्च घटभेद एव तदत्यन्ताभावत्वावच्छिन्न प्रतियोगिताकात्यन्ताभाव इति तत्सिद्धान्तो न युक्तिसहः। विनिगमनाविरहेण घटस्य घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावाभावत्ववत् घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वाच्च। अत एव तादृश सिद्धान्तो नोपाध्यायसम्मतः। अतएवचाभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्याचार्थः। अन्यथा घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे तल्लक्षणस्याव्याप्त्यापत्तेः। अन्योन्याभावप्रतियोगितावच्छेदकाभावेचातिव्याप्त्यापत्तेश्च। नचैवं घटत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वापत्तिरिति वाच्यम्, तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यैव तत्स्वरूपत्वाभ्युपगमात्। तद्वत्ताग्रहे तादृशतदत्यन्ताभावाभावस्यैव व्यवहारात्। उपाध्यायैः घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वाभ्युगमाच्च ॥

नचान्यत्रेति। अन्यत्रभेदात्यन्ताभावाभावातिरिक्तस्थले। घटत्वात्यन्ताभावएवेति। घटभेदाभावस्य घटत्वरूपतया घटभेदात्यन्ताभावाभावः घटत्वात्यन्ताभावरूप इत्यर्थः तथाच घटभेदाभावाभावस्य घटत्वात्यन्ताभावरूपतया साध्यसामान्यपदेन न घटभेदाभावो गृहीतुं शक्यते इत्यर्थः। अतएव तादृशसिद्धान्त इति। अतएव विनिगमनाविरहेनैव (एकपक्षसाधकयुक्त्यभावेन) भेदाभावाभावस्यापि भेदरूपत्व सिद्धेरेव। अतएवचाभावविरहेति। अतएव भेदस्य भेदाभावाभावत्वसिद्धेरेव। आचार्चा इति। वस्तुनिष्ठप्रतियोगित्वम्। प्रतियोग्यभावाभावत्वरूपमित्युदयनाचार्याशयः। अन्यथेति। अन्यथा घटभेदस्य घटभेदाभवाभावरूपत्वाङ्गीकारे, घटभेदे घटभेदाभावप्रतियोगिलक्षणस्याव्याप्तेः। अतिव्याप्त्यापत्तेश्चेतिघटभेदाभावप्रतियोगिलक्षणस्य घटत्वाभावे सत्वादतिव्यात्यापतेः, घटभेदाभावस्य घटत्वरूपत्वेन तदभावत्वस्य घटत्वाभावेऽक्षतत्वात्। नचैवमिति। घटभेदाभावाभावस्य घटभेदरूपत्वेन घटत्वात्यन्ताभावरूपत्वेन च वक्तव्यतया "तदभिन्नाभिन्नस्य तत्स्वरूपत्वमिति, न्यायेन घटत्वात्यन्ताभावाभिन्नेन घटभेदाभावाभावेन घटभेदस्याभिन्नत्वेन घटत्वात्यन्ताभावघटभेदयोरभेद आपाद्यत इति भावः। उपाध्यायैरिति। धर्मिभेदधर्मात्यन्ताभावयोरैक्याभ्युपगमेन घटभेदघटत्यात्यन्ताभावयोरभेदाङ्गीकरणमुचितमेवेतिगङ्गेशोपाध्यायाभिप्रायः॥

**नचैवं साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्ष्यताम्, किं साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेति वाच्यम्, कालिकसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वादिहेतावव्याप्त्यापत्तेः। कालिकसम्बन्धावच्छिन्नसाध्याभावस्य विशेषणताविशेषसम्बन्धेन योऽभावः तस्यापि साध्यरूपतया कालिकसम्बन्धवत् विशेषणताविशेषोपि साध्यीयप्रतियोगितावच्छेदकसम्बन्धः, तेन सम्बन्धेनात्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभाववत्यात्मनि हेतोरात्मत्वस्य वृत्तेः।।**

साध्याभाववृत्तिसाध्यसामान्येयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वविवक्षणस्थलेऽस्य विषयस्य निरूपितत्वेन नेह पुनः निरूप्यते॥

**प्रतियोगितावच्छेदकवत्प्रतियोगिताग्यप्यन्योन्याभावाभावः, तेन तादात्म्यसम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यीयप्रतियोगितत्वस्य नाप्रसिद्धिः ।।**

प्रतियोगितावच्छेदकवदिति। स्वप्रतियोगिप्रतियोगितावच्छेदकधर्मवत् स्वप्रतियोगिप्रतियोगयप्यन्योन्याभावाभावः भवति, (स्वपदं अन्योन्याभावाभावपरम्) अतो घटभेदाभावो घटत्वरूप इव घटरूपोपिभवतीत्यर्थः। तादात्म्यसम्बन्धेन साध्यतायामिति। अन्यथा तादात्म्यसम्बन्धेन (कम्बुग्रीवादिमत्त्वान्) घटवान्घटत्वादित्यत्राव्याप्तिः, साध्याभावात्मकघटभेदे घटभेदाभावानिरूपितप्रतियोगितायास्सत्त्वेपि घटभेदाभावस्य घटरूपसाध्यसामान्यरूपत्वानङ्गीकारे साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिताया अत्राप्रसिद्धत्वात्॥

**इत्थञ्चात्यन्ताभावत्वनिरूपितत्वेनापि साध्य सामान्यीयप्रतियोगिता विशेषणीया, अन्यथा घटान्योभाववान् घटत्वत्वादित्यादावव्याप्तेस्तादवस्थ्यात्, तादात्म्यसम्बन्धस्यापि निरुक्तसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसम्बन्धत्वात् ।।**

इत्थञ्चेति। साध्यसामान्यीयप्रतियोगितायां अत्यन्ताभावत्वरूपानुयोगितानिरूपितत्वं विशेषणं देयम्, अन्यथाघटभिन्नं घटत्वत्वादित्यादावव्याप्तिः, तथाहि-अत्र साध्याभावः घटभेदाभावः घटस्वरूपो गृह्यते, घटभेदाभावस्य घटघटत्वस्वरूपत्वस्याङ्गीकार्यत्वात्, तद्वृत्तिः साध्यसामान्यीया प्रतीयोगिता घटभेदरूपप्रकृतसाध्यनिरूपिता तादात्म्यसम्बन्धावच्छिन्ना प्रतियोगिता ग्राह्या, तत्प्रतियोगिता-

वच्छेछकतादात्म्यसम्बन्धेन लक्षण घटकघटत्वात्मकसाध्याभावाधिकरणघटत्वनिरूपितवृत्तित्वस्यघुटत्वत्व सत्त्वात्। तन्निवेशे तु पूर्वगृहेतघटभेदनिरुपिता प्रतियोगिता अन्योन्याभावत्वरूपानुयोगितानिरूपितैव, नात्यन्ता भावत्वरूपानुयोगितानिरूपिता (अन्योन्याभावत्वनिरूपितत्वञ्चतादात्म्यसम्बन्धावच्छिन्नत्वमेव, अत्यन्ताभावत्वनिरूपितत्वञ्च तादात्म्यभिन्नसम्बन्धावच्छिन्नत्वम्) अतोऽत्यन्ताभावत्वरूपानुयोगितानिरूपितप्रतियोगितापदेन घटभेदाभावाभावत्वरूपानुयोगितानिरूपिता समवायसम्बन्धावच्छिन्ना प्रतियोगिता ग्राह्या, तत्प्रतियोगितावच्छेदकसमवायसम्बन्धावच्छिन्न साध्याभावाधिकरणतामादाय समन्वयः ।।

(नच घटभेदघटभेदाभावाभावयोरैक्यात् घटभेदनिरूपितप्रतियोगितायामप्यत्यन्ताभावत्वनिरूपितत्वमक्षतमिति वाच्यम्, वस्त्वैक्येपि भेदपदसमभिव्याहारस्थलीयायां तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितायां भेदत्वनिरूपितत्वस्य अत्यन्ताभावपदसमभिव्याहारस्थलीलायां तादात्म्यसम्बन्धानवच्छिन्नायां प्रतियोगितायामत्यन्ताभाववत्वनिरूपितत्वस्यचाङ्गीकारेण निरुक्तभेदीयप्रतियोगितायाधर्तुमशक्यतया घटभेदाभावत्वावच्छिन्न समवायसम्बन्धावच्छिन्नप्रतियोगितामादायैव समन्वयो ग्राह्यः)।

**यद्वा, साध्यतावच्छेदकसम्बन्धावच्छिन्न साध्याभाववृत्तिसाध्यसामान्यीयनिरुक्तप्रतियोगित्व तदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्षणीयम्, वृत्त्यन्तमन्यतरविशेषणम्। एवञ्चघटान्योन्याभाववान् घटत्वत्वादित्यादौ साध्याभावस्य घटत्वादेः साध्यप्रतियोगिकत्वविरहेऽपि न क्षतिः। तादृशान्यतरस्य प्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् ।।**

ननु घटभिन्नं घटत्वत्वादित्यत्राव्याप्तिः, घटभेदाभावाभावस्य घटत्वाभावरूपत्वेन घटभेदरूपत्वाभावेन घटत्वरूपघटभेदाभावात्मकसाध्याभाववृत्तिसाध्यसामान्यीय प्रतियोगित्वाप्रसिद्धेः, इत्याशङ्कायां कल्पान्तरमवतारयति। यद्वेति। घटभिन्नं घटत्वत्वादित्यत्र घटत्वरूपसाध्याभावे घटभेदरूपप्रकृतसाध्यीयप्रतियोगितायाः असत्त्वेन घटभेदाभावाभावीयप्रतियेगितायास्तत्रसत्त्वेपि घटभेदाभावाभावस्य घटत्वाभावरूपतया साध्यरूपत्वाभावेन निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वा प्रसिद्ध्यऽव्याप्तिसम्भवेऽपि घटत्वात्मकसाध्याभावेप्रकृतसाध्यीयप्रतियोगितावच्छेदकतायास्समवायसम्बन्धावच्छिन्नायास्सत्त्वे न नाव्याप्तिः। साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वमात्रोक्तौ निरुक्तरीत्या घटभेदसाध्यकसद्धेतावव्याप्तिः। साध्याभाववृतिसाध्यीयप्रतियोगितावच्छेदकत्वमात्रोक्तौ वह्निमान् धूमादित्यत्र साध्या-

भावे वह्न्यभावाभावात्मकसाध्यीयप्रतियोगिताया एव सत्त्वेन तत्प्रतियोगितावच्छे-
दकताया असत्त्वेनाव्याप्तिप्रसङ्गः, अतोऽन्यतरपर्यन्तानुसरणम् ।।

नच वह्निमान् धूमादित्यत्रापि वह्न्यभाववद्भेदकरूपसाध्यसामान्यीयप्रतियो-
गितावच्छेदकतायाः साध्याभावे सत्त्वेन समन्वयसम्भवेनान्यतरपर्यन्तानुसरणं व्यर्थमेवेति
वाच्यम्, तथासतिकपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तेः, कपिसंयोगाभावस्य
केवलान्वयितया तद्वद्भेदस्याप्रसिद्धतया साध्यपदेन कपिसंयोगाभाववद्भेदस्य धर्तुम-
शक्यत्वात् । अन्यतरनिनिवेशे तु तदन्यतरान्तर्गतकपिसंयोगाभावाभावीयप्रतियो-
गितां साध्याभाववृत्तिमुपादाय समन्वयसम्भवात् । नच कपिसंयोगाभावस्य केवला-
न्वयित्वेन कपिसंयोगाभावाभावस्याप्य प्रसिद्धेः कपिसंयोगाभावाभावीयप्रतियोगि-
ताभादाय कथं समन्वय इति वाच्यम्, "अभावविरहात्मत्वं वस्तुनः प्रतियोगि-
तेस्याचार्यमतानुसारेण कपिसंयोगनिष्ठायाः प्रतियोगितायाः कपिसंयोगाभावाभाव-
त्वरूपत्वेन वक्तव्यतया तत्सिद्धेरङ्गीकार्यत्वात् । अथवा, स्वात्यन्ताभावसामाना-
धिकरण्यस्याव्याप्यवृत्तित्वरूपत्वेन कपिसंयोगाभावनिष्टत्वाभिमताव्याप्यवृत्तित्वा-
नुरोधेन कपिसंयोगाभावाभावस्यावश्यमभ्युपेयत्वात् ।।

अत्रापि कल्पे तादात्म्यसम्बन्धेन साध्यतायामव्याप्तिवारणायप्रतियोगिता-
वच्छेदकवत्प्रतियोग्यप्यन्योन्याभावाभाव इत्यङ्गीकर्तव्यम् । घटभेदसाध्यकसद्धेतौ
साध्याभाववृत्तिप्रकृतसाध्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धमादायाव्याप्ति-
वारणाय साध्यीयप्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वं निवेशनीयमेव । **वृत्त्यन्त-
मन्यतरविशेषणमिति** । साध्याभाववृत्तित्वस्य साध्यीयप्रतियोगित्व साध्यीयप्रति-
योगितावच्छेदकत्वयोः पृथग्विशेषणत्वाङ्गीकारेघटभेदसाध्यकसद्धेतौ तादृशप्रति-
योगित्वाप्रसिद्ध्याकपिसंयोगी एतद्वृक्षत्वादित्यत्र तादृशप्रतियोगितावच्छेदकत्वा-
प्रसिद्ध्याचाव्याप्तिरिति वृत्त्यन्तस्यान्यतरविशेषणत्वमभ्युपगतम्, तथाविशेषणत्व-
स्वीकारे निरुक्तस्थलद्वयेपि तादृशान्यन्तरत्वावच्छिन्नस्य यस्यकस्यचित् साध्याभावे
सत्वेन नाव्याप्तिप्रसक्तिः ।।

**नच तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यक सद्धेताव-
व्याप्तिरिति वाच्यम्, निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या निरुक्तसंसर्गक-
निरवच्छिन्नाधिकरणता तदाश्रयावृत्तित्वस्य विवक्षितत्वात् । गुणकर्मान्यत्वविशिष्ट-
सत्ताऽभाववान् गुणत्वादित्वादित्यादौ सत्ताऽत्मकसाध्याभावाधिकरणत्वस्य गुणा-
दिवृत्तित्वेपि साध्याभावत्वविशिष्टनिरूपिताधिकरणत्वस्य गुणावृत्तित्वान्नाव्याप्तिः ।**

**नचैवं कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्, केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैव तद्दोषस्य वक्ष्यमाणत्वात् ।।**

कपिसंयोगीति । कपिसंयोगो एतद्वृक्षत्वादित्यात्राव्याप्तिः, अग्रे वृक्षः कपिसंयोगो मूलेनेति प्रतीत्या मूलावच्छेदेन कपिसंयोगाभावाधिकरणत्वाद्वृक्षस्येति भावः । साध्याभावत्वविशिष्टनिरूपिता साध्याभावत्वावच्छिन्नाधेयतानिरूपितेत्यर्थः । निरुक्तसंसर्गकनिरवच्छिन्नाधिकरणता साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीय प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणतेत्यर्थः। तथाच कपिसंयोगाभावस्य वृक्ष मूलावच्छेदेनैव वर्तमानतया तदधिकरणताया मूलावच्छिन्नतया निरवच्छिन्नत्वच्छिन्नत्वाभावेन नाव्याप्तिः ।।

ननु स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्यैव गत्यन्तराभावेन स्वप्रतियोगिरूपत्वस्य वक्तव्यतया कपिसंयोगो एवद्वृक्षत्वाद्वित्यत्र साध्याभावाधिकरणत्वेन वृक्षमादायाव्याप्तिदानमसङ्गतम्, तथा हि— साध्यसामान्यपदेनात्र कपिसंयोगाभावत्वावच्छिन्ननिरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः, तस्यैव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्न स्वनिष्ठप्रतियोगिताकाभावरूपत्वात्, समवायेन कपिसंयोगवत्तावुद्धिं प्रति कपिसंयोगाभावनिष्ठशुद्धस्वरूपसम्बन्धावच्छिन्नप्रकारताकनिश्चयस्य विषयविरोधाभाविनाविरोधितया निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नकपिसंयोगाभावत्वावच्छिन्नप्रकारताशालिनिश्चयस्यैव प्रतिबन्धकत्वेन निरवच्छिन्नस्वरूपसम्बन्धस्यैव स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धत्वात् । तथाच साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितापदेन निरवच्छिन्न स्वरूपसम्बन्धावच्छिन्ना कपिसंयोगाभावत्वावच्छिन्नप्रतियोगितैव ग्राह्या, तत्प्रतियोगितावच्छेदकनिरवच्छिन्नस्वरूपसम्बन्धन साध्याभावाधिकरणत्वस्य वृक्षेऽभावात् इतिचेन्न, कपिसंयोगवत्तावुद्धिं प्रतिकपिसंयोगाभावत्वावच्छिन्ननिरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयस्यैव अव्याप्यवृत्तित्वज्ञानानास्कन्दितशुद्धस्वरूपसम्बन्धावच्छिन्न कपिसंयोगाभावत्वावच्छिन्नप्रकारताशालिनिश्चयस्यापि प्रतिबन्धकत्वाङ्गीकारेण एतन्मते शुद्धस्वरूपसम्बन्धावच्छिन्नकपिसंयोगाभावत्वावच्छिन्न प्रतियोगिताकावस्यापि स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नस्वनिष्टप्रतियोगिताकाभावरूपत्वेन साध्यसामान्यपदेन ग्राह्यतया तत्प्रतियोगितावच्छदेकशुद्धस्वरूपसम्बन्धेन साध्याभावाधिककरणवृक्षनिरूपितवृत्तीतामादायाव्याप्त्यभिधानस्य सङ्गतत्वात् ।।

अत्र साध्याभावनिष्ठाधेयतायां साध्याभावत्वावच्छिन्नत्वं विशेषणं देयम्, अन्यथा गुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुणत्वादित्यत्राऽव्याप्तिः, तथाहि- साध्याभावः गुणकर्मान्यत्वविशिष्टसत्ताभावाभावः, सच तादृश्यसत्तास्वरूपः, "विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन विशिष्टसत्तायाश्शुद्धसत्तायाश्चैक्यात् साध्याभावनिष्ठाधेयतापदेन सत्तात्वावच्छिन्नाधेयता गृह्यते, तन्निरूपिताधिकरणता-वद्गुणनिरूपितवृत्तित्वस्य गुणत्वे सत्त्वादिति। तन्निवेशेतु गुणे विशिष्टसत्ताऽभावाभाव-त्वावच्छिन्नाधिकरणता नास्ति, गुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुण इति प्रतीत्या तादृशविशिष्टसत्ताऽभावस्यैव तद्विरोधिनो गुणेसत्त्वात्, अतो न तत्रा-व्याप्तिः। कपिसंयोगाभाववानिति। कपिसंयोगाभाववान् सत्त्वादित्यत्र साध्याभाव-स्य कपिसंयोगस्याग्रविच्छेदेनैव वर्तमानतया कपिसंयोगरूपसाध्याभावस्य निरवच्छि-न्नाधिकरणताया अप्रसिद्धत्वादव्याप्तिर्गिति भावः। केवलान्वयिनीति। केवलान्वयि-कपिसंसयोगाभावादिसाध्यकस्थलीयहेतावव्याप्तेः केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैव मूले वक्ष्यमाणतया तद्दोषवारणावश्यकत्वाभावादित्यर्थः॥

अत्र केचित् प्रेक्षावद्वुद्धिवैशद्याय कांश्चन विकल्पप्रकारा नाचक्षते, तथाहि- साध्याभावनिष्ठाधेयतायां साध्यवत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, साध्यवत्ताग्रहविरोधिताघटत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यता-वच्छेदकावच्छिन्नप्रकारताशालिवुद्धित्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेद कप्रकारतावच्छेदकत्वरूपम्, तथाच गुणत्ववान् ज्ञानत्वात् सत्रावान् जातेरित्यादौ नाव्याप्तिः, तथाहि-ज्ञानं गुणत्ववत् इति वुद्धिं प्रति स्वरूपसम्बन्धेन गुणत्वाभाव-वत् ज्ञानं इति निश्चयस्य घटस्सत्तावानिति बुद्धिं प्रतिस्वरूपसम्बन्धेन सत्ताऽभाववान् घट इति निश्चयस्य प्रतिबन्धकत्वेन उभयत्रापि साध्यवत्ताग्रहविरोधिताघटकस्वरूप-सम्बन्धेन साध्याभावाधिकरणे सामान्यादौ ज्ञानत्वादे स्वतमानतया नाव्याप्तिः घटत्वात्यन्ताभाववान् घटभिन्नं वा पटत्वादित्यादौ साध्यवत्ताग्रहविरोधिता-घटकसमवायेन साध्याभावाधिकरणे घटेपटत्वादेरसत्त्वेन नाव्याप्तिः। आत्मत्वप्रकार-कप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववानात्म-त्वादित्यत्रापि साध्यवत्ताग्रहविरोधिताघटककालिकसम्बन्धेन साध्याभावाधिकरणे जन्ये आत्मत्वहेतोरसत्त्वेन नाव्याप्तिः। कपिसंयोगी एतद्वृक्षत्वादित्यत्रापि ना-व्याप्तिः, तथाहि- वृक्षः कपिसंयोगीति वुद्धिं प्रति विषयविरोधाभावेन स्वरूप-सम्बन्धेन कपिसंयोगाभाववत्तानिश्चयस्यप्रतिबन्धकत्वेपि निरवच्छिन्नस्वरूपसम्बन्धेन कपिसंयोगाभाववत्तानिश्चयस्यं प्रतिबन्धकतया तादृशप्रकारतावच्छेदकनिरवच्छिन्न-

स्वरूपसम्बन्धेन साध्याभावाधिकरणे गुणादौ हेतोरसत्त्वेन नाव्याप्तिः। यदि कपिसंयोगवत्ताबुद्धिं प्रति अव्याप्यवृत्तित्वज्ञानानास्कन्दितकपिसंयोगाभाववत्तानिश्चयस्य प्रतिबन्धकत्मङ्गी क्रियते, तथाच स्वरूपसम्बन्ध एव तादृशविरोधिताघटक-इत्यव्याप्तितादवस्थ्यमित्युच्यते तदा निरुक्तलक्षण इव साध्याभावाधिकरणतायां निरवच्छिन्नत्वं निवेश्यै वा व्याप्तिर्वारणीया। कपिसंयोगाभाववान् सत्त्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादौ दोषवारणप्रकारस्तु साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिताघटितकल्प इव बोध्यः॥

यद्वा स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वं साध्याभावनिष्ठाधेयतायां विशेषणं देयम्, स्वप्रतियोगित्ताग्रहविरोधिताघटकत्वञ्च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्न प्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकत्वरूपं ग्राह्यम्, स्वपदं साध्याभावपरम्, पूर्वोक्तस्थलेषु पूर्वोक्तरीत्यैव दोषवारणं ग्राह्यम्॥

अथवा स्वप्रतियोग्यनधिकरणं यत्साध्याभावाधिकरणं तन्निरूपितवृत्तित्वाभावो व्याप्तिरिति वक्तव्यम्, अत्र साध्याभावाधिकरणत्वं सम्बन्धसामान्येनैव ग्राह्यम्, प्रतियोग्यनधिकरणत्वन्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावद्भिन्नत्वरूपं ग्राह्यम्, गुणत्ववान् ज्ञानत्वात् सत्तावान् जातेरित्यादौ निरुक्तसाध्याभावाधिकरणज्ञानादेः स्वपदग्राह्यसाध्याभावस्य प्रतियोगिनः साध्यतावच्छेदकसम्बन्धेनाधिकरणत्वेन न तत्राव्याप्तिः। घटत्वात्यन्ताभाववान् घटान्योन्याभाववान् पटत्वादित्यादौ स्वप्रतियोग्यनधिकरणसाध्याभावाधिकरणघटादौ हेतोरवृत्तित्वेन नाव्याप्तिः। आत्मत्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववानात्मत्वादित्यत्र आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावरूपस्वप्रतियोगिनः साध्यतावच्छेदकस्वरूपसम्बन्धेनाधिकरणे साध्याभावस्य कालिकसम्बन्धेनाधिकरणे जन्ये आत्मत्वहेतोरसत्त्वेन नाव्याप्तिः। कपिसंयोगी एतद्वृक्षत्वादित्यत्र स्वप्रतियोगिकपिसंयोगाधिकरणमेव साध्याभावाधिकरणवृक्षो भवति, तदनधिकरणन्तु वृक्षो न भवति, भेदस्य व्याप्तवृत्तित्वेन व्याप्यवृत्तेरवच्छेदकसद्भावे प्रमाणाभावेन च तदधिकरणभेदस्य वृक्षे निरूपयितुमशक्यत्वात्, किन्तु तादृशं गुणादि तत्र हेतोरवृत्तेः नाव्याप्तिः। अत्र साध्याभावाधिकरणतायां साध्याभावत्वावच्छिन्नत्वं न निवेशनीयम्, गुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुणत्वादित्यत्र स्वप्रतियोगिगुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुणत्वादित्यत्र स्वप्रतियोगिगुणकर्मान्यत्वविशिष्टसत्ताऽभावत्वावच्छिन्नस्याधिकरणमेव

साध्याभावाधिकरणगुणो भवति, अतस्तादृशसाध्याभावाधिकरणद्रव्यनिरूपित-वृत्तित्वाभावस्य गुणत्वहेतौ सत्त्वान्नाव्याप्तिः ।। कपिसंयोगिभिन्नं गुणत्वादित्यत्र स्वप्रतियोगिकपिसंयोगिभेदस्यानधिकरणे साध्याभावाधिकरणे वृक्षे गुणत्वस्यावृत्तः नाव्याप्तिः (अत्र कल्पे निरवच्छिन्नसाध्याभावाधिकरणतायाः प्रवेशो नाऽस्ति) कपिसंयोगाभाववान् सत्त्वादित्यत्र तु मूलोक्तगतिरेवानुसन्धेया । अत्र कल्पे साध्या-भावस्साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः, अन्यथा विशिष्टा भावोभया-भावादिकमादाय वह्निमान्धूमादित्यादावव्याप्तिः। प्रतियोगिवैयधिकरण्यघटक स्व-प्रतियोगितावच्छेदकावच्छिन्नाधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे समवायेन वह्न्यभावमादाय वह्निमान्धूमादित्यादाव्याप्तिः । अत्र आधेयतायां स्व-प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेप्ययमेव दोषो ग्राह्यः। साध्यतावच्छे-दकावच्छिन्नप्रतियोगितायां साध्यातावच्छेदकसम्बन्धावच्छिन्नत्वं न निवेशनीयम्, प्रयोजनाभावात् । साध्यातावच्छेदकसम्बन्धावच्छिन्नाधेयतायां स्वप्रतियोगिता-वच्छेदकावच्छिन्नत्वानिवेशे गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रातिव्याप्ति-र्ग्राह्या। स्वप्रतियोग्यनधिकरणत्व मात्र स्वप्रतियोग्यधिकरणभिन्नत्वरूपमेव वाच्यम्, नतु स्वप्रतियोग्यधिकरणत्वाभावरूपं तत्, तथात्वे अव्याप्यवृत्त्यधिकरणता नाव्या-प्यवृत्तिरिति नियमाङ्गीकारपक्षे दोषाभावेपि अव्याप्यवृत्त्यधिकरणताया अव्याप्य-वृत्तित्वाङ्गीकर्तृमते कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तिस्सम्भवत्येव। तस्य प्रति-योग्यधिकरणभिन्नत्वरूपत्वे तु भेदस्य व्याप्यवृत्तित्वेन अधिकरणभेदघटितलक्षणे नाव्याप्त्यवकाशप्रसङ्गः, यदि तु अव्याप्यवृत्तिमद्भेदस्याऽयाप्यवृत्तित्वमभिमन्यते तदा स्वप्रतियोग्यनधिकरणत्वमित्यनेन स्वप्रतियोग्यधिकरणत्वसामानाधिकरणो-भयावृत्तिधर्मावच्छिन्न प्रतियोगिताकभेदकूटवत्त्वं विवक्षणीयम्, अतो नाव्याप्यवृत्ति-साध्यकदोपावकाश इति सर्वं समञ्जसम् ।।

ननु हेत्वनधिकरणं यत्साध्याभावाधिकरणं तन्निरूपितवृत्तित्वाभाव एव व्याप्तिरस्तु प्रतियोग्यनधिकरणत्वघटितलक्षणापेक्षया लाघवात् कपिसंयोग्येतद्वृक्ष-त्वादित्यादाव्व्याप्त्यनवकाशाश्चेति चेन्न, धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः)।

**नच तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्नसाध्याभावाधि-करणाप्रसिद्ध्याऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये अन्योन्या-भावात्यन्ताभावस्य प्रतियोगितावच्छेदकरूपत्वेपि अव्याप्यवृत्तिमदन्योन्याभावा-भावस्य व्याप्यवृत्तिस्वरूपस्यातिरिक्तस्याभ्युपगमात् । तच्चाग्रे स्फुटीभविष्यति ।।**

नच तथापीति। कपिसंयोगिभिन्नं गुणत्वादित्यत्र लक्षणघटकसाध्या-

भावात्मककपिसंयोगिभेदाभावरूप कपिसंयोगस्यनिरवच्छिन्नाधिकरणाप्रसिद्ध्याऽव्याप्तिरिति भावः। अव्याप्यवृत्तिमदिति। कपिसंयोगादिमद्भेदाभावो नाव्याप्यवृत्तिकपिसंयोगादिरूपः, किन्तु तादृशाभावो व्याप्यवृत्तिरतिरिक्त इत्यभ्युपेयते, तथाच व्याप्यवृत्तेरतिरिक्तस्यतस्य निरवच्छिन्नाधिकरणस्य प्रसिद्ध्या नाव्याप्तिरिति भावः। तच्चाग्रे स्फुटीभविष्यतीति। चतुर्थलक्षणेऽव्याप्यवृत्तिमद्भेदाभावस्य भेदप्रतियोगितावच्छेदकानात्मकत्वेन व्याप्यवृत्तित्वानभ्युपगमे वृक्षादौ मूलावच्छेदेनकपिसंयोगिभेदाभावभानुपपत्तिरित्यादिना वक्ष्यमाणत्वादिति भावः॥

ननु तथापि समवायादिना गगनादिहेतुके इदं वह्निमत् गगनादित्यादावतिव्याप्तिः। वह्न्यभाववति हेतुतावच्छेदकसमवायसम्बन्धेन गगनादेरवृत्तेः। नच तल्लक्ष्यमेव, हेतुतावच्छेदकसम्बन्धेन पक्षधर्मत्वाभावाच्चा सद्धेतुत्वव्यवहार इति वाच्यम्। तत्रापि व्याप्तिभ्रमेणैवानुमितेरनुभवसिद्धत्वात्। अन्यथा धूमवान् वह्नेरित्यादावपि लक्ष्यत्वस्य सुवचत्वात्। एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः, विशिष्टसत्त्वस्य केवलसत्ताऽनतिरिक्ततया द्रव्यत्वाभाववति गुणादौ तस्य वृत्तेः, गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतेस्सर्वसिद्धत्वात्। सत्तावान् द्रव्यत्वादित्यादावव्याप्तेश्च, सत्ताऽभाववतिसामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेरितिचेन्न। हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणता प्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेननिरुक्तसाध्याभाववत्त्वविशिष्टनिरूपितनिरुक्तसंसर्गकनिरवच्छिन्नाधिकरणताश्रयवृत्ति सामान्याभावस्य विवक्षितत्वात्। वृत्तिश्च न हेतुतावच्छेदकसम्बन्धेन विवक्षणीया। अस्ति च सत्तावान् द्रव्यत्वादित्यादौ सत्ताऽभावाधिकरणतावद्वृत्तेः हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सामान्याभावो द्रव्यत्वादौ, समवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताऽभावाधिकरणतावद्वृत्त्यभावस्य व्यधिकरणसम्बन्धावच्छिन्नाभावतया संयोगसम्बन्धावच्छिन्नगुणाभावादेरिव कवलान्वयित्वात्। द्रव्यं सत्त्वादित्यादौ च द्रव्यत्वाभावाधिकरणगुणादिवृत्तित्वस्यैव समवासम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सत्तायां सत्त्वेन नातिव्याप्तिः। द्रव्यं विशिष्टसत्त्वादित्यादाव्याप्तिवारणाय प्रतियोगिताकान्तमाधेयताविशेषणम्। वस्तुतस्तु, एतल्लक्षणकर्तृनयेविशिष्टसत्त्वं विशिष्टनिरूपिताधारतासम्बन्धेनैव द्रव्यत्वव्याप्यम्, नतु समवायसम्बन्धेन। तथाच प्रतियोगिताकान्तमाधेयताविशेषणं अनुपादेय-

मेव। तदुपादाने हेतुतावच्छेदकभेदेन कार्यकारणभावभेदापत्तेः। हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वेसतीत्यनेनापि विशेषणात् वह्निमान् गगनादित्यादौ नातिव्याप्तिः।।

गगनादित्यादावतिव्याप्तिरिति। साध्यासमानाधिकरणत्वेनास्यहेतोर्विरुद्धहेतुत्वाभिप्रायेणातिव्याप्तिकथनम्। नच तल्लक्ष्यमिति। तत् गगनरूपं साधनं, लक्ष्यमेव अस्याः व्याप्तेः लक्ष्यमेवेत्यर्थः। व्याप्यहेतूनां व्याप्तेर्लक्षणत्वेन गगनहेतोरपिपूर्वपक्षीयव्याप्तिविशिष्टत्वेन लक्ष्यत्वस्याव्याहतत्वादिति भावः। असद्धेतुत्वव्यहार इति। व्याप्तिपक्षधर्मत्वोभयाभाववतोऽसद्धेतुत्वव्यवहारभाजनत्वेन हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताघटितपक्षधर्मताया अत्राभावेन पक्षधर्मत्वाभावप्रयुक्तोभयाभावस्य सत्त्वेन असद्धेतुताव्यवहारस्य न व्याहतिः, व्याप्तेस्सत्त्वेन लक्ष्यत्वञ्च व्याहतमिति भावः। केवलव्याप्त्यभावस्यैवासद्धेतुताव्यवहारप्रयोजकत्त्वाङ्गीकारे ह्रदोवह्निमान् धूमादित्यत्रधूमेपिव्याप्तेस्सत्त्वेन तदभावस्याभावेन असद्धेतुताव्यवहाराभावप्रसङ्गः, अतस्तादृशोभयाभावस्यैवासद्धेतुताव्यवहारप्रयोजकत्वमङ्गीकार्यम्, तथाचात्रापि तादृशव्यवहारोपपत्तिस्सम्भवतीति भावः। व्याप्ति भ्रमेणैवेति। अत्र भवदुक्तरीत्या व्याप्तेरङ्गीकारे एतदनुमितेः व्याप्त्यंशेपि प्रमाजन्यत्वेन अत्रानुमितिः व्याप्तिभ्रमजन्येत्यनुभवस्यानुपपत्तिः, अतोऽत्र व्याप्तिरपि नाङ्गीकार्येति भावः (इदञ्च साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपव्याप्तेः सिद्धान्तव्याप्तेर्वा आश्रये हेतावेव व्याप्यहेतुत्वमङ्गीकार्यं, नान्यत्रेत्याशयेनोच्यते)

अन्यथेति। अन्यथा यद्धेतुकनुमितौ व्याप्तिभ्रमजन्यत्वमनुभवसिद्धं तद्धेतोः व्याप्यलक्षणलक्ष्यत्वाभ्युपगमे, धूमवान् वह्नेः द्रव्यत्त्वाद्वेत्रापि हेतुतावच्छेदकधर्माक्रान्ते पर्वतीयवह्न्यादौ धूमाभाववदवृत्तित्वरूपव्याप्तेस्सत्त्वेन अस्य हेतोरपि लक्ष्यत्वप्रसङ्ग इति भावः। एवं द्रव्यमिति। द्रव्यं गुणकर्मान्यन्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिः, (अन्यत्वं भेदः, स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन गुणकर्मभेद वैशिष्ट्यं सत्तायां ज्ञेयम्) तथाहि– द्रव्यत्वाभावरूपसाध्याभावाधिकरणे गुणे तादृशविशिष्टसत्तायास्सत्वात्, "विशिष्टं शुद्धान्नातिरिच्यते, इति न्यायेन विशिष्टसत्तायाश्शुद्धसत्तायाश्चैक्यात् सत्तायास्तत्रसत्त्वाङ्गीकारे विशिष्टसत्ताया अपि तत्राङ्गीकर्तव्यत्वात्, अवएव गुणेगुणकर्मान्यत्वविशिष्टसत्तेति प्रतीत्युपपत्तिश्च सम्भवति। सत्तावान् द्रव्यत्वादिति। सामान्यादौ कस्यापि समवायेनासत्त्वेन साध्याभावाधिकरणसामान्यादिनिरूपितसमवायसम्बन्धावच्छिन्न वृत्तित्वाप्रसिद्ध्या तत्राव्याप्तिरिति भावः। हेतुतावच्छेदकावच्छिन्नेति। हेतुतावच्छेदका-

वच्छिन्नहेत्वधिकरणताप्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयता निरूपित-विशेषणताविशेषसम्बन्धो नाम हेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणता-निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिक स्वरूपसम्बन्धः, तथा च तादृशवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन निरूक्तसाध्याभावनिरुपितवृत्तित्वं नास्तीति प्रतीतिसिद्धाभावो व्याप्तिरिति पर्यवसितम्, (तादृशस्वरूपसम्बन्धावच्छिन्ना या साध्याभाववद्वृत्तित्वनिष्ठा प्रतियोगिता तन्निरूपकाभावो व्याप्तिरित्यर्थः)।

अत्र कल्पे साध्याभाववद्वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं न देय-मेव, प्रयोजनाभावात्, सत्तावान् जातेरित्यादावव्याप्तेश्च। द्रव्यं विशिष्टसत्त्वादित्यत्र समन्वयप्रकारस्त्वित्थम्, साध्याभाववद्गुणादिवृत्तित्वस्य विशिष्टसत्तायां सत्त्वेपि तस्य तादृशगुणादिनिरूपितवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेनैवविद्यमानतया हेतुता-वच्छेदकविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपितहेतुतावच्छेदक-समवायसम्बन्धावच्छिन्नवृत्तित्वस्य द्रव्यनिरूपितवृत्तितारूपतया तत्प्रतियोगिकस्वरूप सम्बन्धस्य गुणादिनिरूपितवृत्तित्वस्य व्यधिकरणतया संयोगसम्बन्धेन गुणो नास्तीति प्रतीतिसिद्धाभावस्यैव हेतुतावच्छेदकावच्छिन्नाधेयतानिरूपितहेतुतावच्छेदकसम्ब-न्धावच्छिन्न वृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन साध्याभावाधिकरणगुणादिनिरू-पितवृत्तित्वं नास्तीति प्रतीतिसिद्धाभावस्य केवलान्वयितया हेतौ सत्त्वात्समन्वयः। द्रव्यं सत्त्वादित्यत्र तु हेत्वधिकरणसाध्याभावाधिकरणयोः गुणादिरूपतया तादृश-सम्बन्धेन साध्याभाववद्गुणादिवृत्तिताया एव सत्तायां सत्त्वान्नातिव्याप्तिः। सत्ता-वान् द्रव्यत्वादित्यादौ सत्ताऽभाववत्सामान्यादिनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्ति-त्वस्य प्रमेयत्वादौ सत्त्वेपि हेत्वधिकरणद्रव्यनिरूपितसमवायसम्बन्धावाच्छिन्नवृत्तित्व-प्रतियोगिकंस्वरूपसम्बन्धेन तस्य हेतावभावान्नाव्याप्तिः। प्रतियोगिकान्तमाधेय-ताविशेषणमिति। हेतुतावछेदकसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन साध्याभाववद्वृत्तित्वाभाववत्त्वमात्रोक्तौ द्रव्यं विशिष्टसत्त्वादित्यत्र द्रव्यत्वाभाव-वद्गुणादिनिरूपितसमवायसम्बन्धावच्छिन्न वृत्तित्वस्य समवायसम्बन्धावच्छिन्नवृत्ति-त्वप्रतियोगिकस्वरूपसम्बन्धेन हेतौ सत्त्वादव्याप्तिः, तन्निवेशेतु हेतुतावच्छेदकता-पर्याप्त्यधिकरणगुणकर्मान्यित्व) (वैशिष्ट्य सतात्वरूपधर्मद्वयावच्छिन्नाधेयतानिरू-पिताधिकरणंतानिरूपितवृत्तित्वस्य द्रव्यनिरूपितवृत्तितारूपतया एतदधिकरणता-निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन गुणा-दिवृत्तित्वं नास्तीत्यभावस्य हेतौ सत्त्वात्समन्वय इति, गुणे गुणकर्मान्यत्वविशिष्ट-सत्तेति प्रतितेस्सत्त्वेपि गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीत्यभावेन

तादृशविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणता गुणे नाङ्गीक्रियते, किन्तु द्रव्य एव, अतो द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः। नच विशिष्टसत्तायाश्शुद्धसत्तायाश्चैकत्वेन विषयावाधात्, गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीतिः सत्तावान् गुण इति प्रतीतिरिव कुतो न जायते इति वाच्यम्, गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतौ गुणनिरूपितसत्तात्वावच्छिन्नवृत्तिताया एव भानाङ्गीकारेण तत्र तादृशविषयबाधाभावेन तादृशप्रतीतिरस्तु नाम, गुण कर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रतीतौ "विशेषणविशेष्योभयं यत्र तत्र विशिष्टाधिकरणतेति, न्यायेन विशेष्यीभूतसत्तायाः गुणेसत्त्वेऽपि विशेषणस्य गुणकर्मभेदस्य गुणेऽसम्भवेन न तादृशव्यवहारप्रसङ्गः ।। अथवा तत्प्रतीतौ गुणकर्मान्यत्वत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः सत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाश्च (तदधिकरणताद्वयस्य) भानाङ्गीकारेण गुणे गुण कर्मन्यत्त्वत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया अभावेन न तादृशव्यवहारप्रसङ्गः । वस्तुतस्त्विति । द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्ट सत्तायाः स्वनिष्ठविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतासम्बन्धेनैव हेतुत्वमेतन्मतेऽङ्गीक्रियते, तथाच साध्याभावाधिकरणे गुणादौ तादृशसम्बन्धेन हेतोरवर्तमानतया नाव्याप्तिः। विशिष्टनिरूपिताधारतासम्बन्धेन गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणता सम्बन्धेनेत्यर्थः । द्रव्यत्वव्याप्यं द्रव्यत्वसाधकम् । प्रतियोगिताकान्तामाधेयताविशेषणमिति । हेत्वधिकरणतानिरूपितत्वपर्यन्तस्य आधेयताविशेषणत्वमनावश्यकमितिभावः । **हेतुतावच्छेदकभेदेनेति** । अयं भावः, पर्वतोवह्निमानित्यनुमितिं प्रति (वह्निव्याप्यवान्) वह्न्यभाववदवृत्तिमान् पर्वत इति निश्चयस्य व्याप्यतावच्छेदकधूमत्वाद्यनवगाह्यनेकहेतुविषयकपरामर्शसाधरण्येन लाघवात्कारणत्वं क्लृप्तम् प्रतियोगितानिरूपकान्तस्य निवेशे तु हेत्वधिकरणस्यं घटकतया धूमालोकादिततद्धेतुभेदेन कार्यकारणभावभेदापत्तिः। पृथक्-पृथक् धूमालोकादिविषयकपरामर्शानां वह्न्यनुमितिकारणत्वस्वीकारे धूमादिविषयकपरामर्शोत्तरमालाकादि लिङ्गकानुमित्यापत्तिवारणाय तत्तत्परामर्शाव्यवहितोत्तरत्वं तत्तत्परामर्शकार्यतावच्छेदककोटौ निवेशनीयम्, तथाच, धूमहेतुकपरामर्शाव्यवहितोत्तरजायमानानुमितित्वावच्छिन्नं प्रति धूमविषयकपरामर्शस्य आलोकविषयकपरामर्शाव्यवहितोत्तरजायमानानुमितित्वावच्छिन्नं प्रति आलोकविषयकपरामर्शस्य च कारणत्वमङ्गीकार्यम्, एवमन्यत्रापि हेतुभेदेन कार्यकारणभावभेदोऽङ्गीकार्यः, तथाच महद्गौरवं प्रसज्यते, तथाच प्रतियोगितानिरूपकान्तविशेषणपरित्यागः विशिष्टसत्तायाः

विशिष्टनिरूपिताधारतासम्बन्धेन हेतुतांस्वीकारश्च समुचित:।। नन्वेवमपि वह्निमद्ग-गनादित्यत्रातिव्याप्तिर्दुवरित्यत आह। हेतुतावच्छेदकेति। तथाच हेतुतावच्छेदक-सम्बन्धावच्छिन्नसम्बद्धताश्रयत्वस्य पृथक् दलस्यनिवेशे गगनस्य समवायेनासम्बद्ध-त्वान्नातिव्याप्ति:। नचैवं कालिकसम्बन्धेन गगनस्य हेतुतायामितिव्याप्तिर्दुवरिति वाच्यम्, तदा साध्याभाववदवृत्तित्वदलाभावादेवातिव्याप्तेर्वारणात्, तस्य साध्या-भाववति ह्रदादौ कालिकसम्बन्धेन सम्बन्धित्वात्॥

(हेतुतावच्छेदकसम्बन्धावच्छिन्न सम्बन्धाश्रयत्वदलेनैववह्निमद्गगनादित्यादौ दोषवारणात् द्रव्यं विशिष्टसत्त्वादितिस्थलान्तरमनुसृतम्। साध्याभाववद्वृत्तितान-वच्छेदकं यद्धेतुतावच्छेदकं तद्वत्वं व्याप्तिरित्युक्त्यैव द्रव्यं विशिष्टसत्त्वादित्यत्राव्या-प्ति वारणात्सत्तावान् जातेरिति स्थलान्तरानुसरणं कृतम्)।

**ननु तथापि उभयत्वमुभयत्रैव पर्याप्तं नत्वे कत्रेति सिद्धान्तादरे घटत्व-वान् घटपटोभयत्वादित्यादौ पर्याप्त्याख्यसम्बन्धेनोभयत्वहेतुकेऽतिव्याप्ति:, घट-त्वाभाववति हेतुतावच्छेदकसम्बन्धेन हेतोरवृत्ते:, पटो न घटपटोभयमिति प्रतीते-रितिचेन्न। तादृशसिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसामानाधिकरण-त्वेसतीत्यनेनैव विशेषणीयत्वादिति। अतएव निविशतां वा वृत्तिमत्त्वं साध्य-समान्याधिकरणत्वंवेति केवलान्वयि ग्रन्थे दीधितिकृत:।।**

ननु तथापिति। घटत्ववान् घटपटोभयत्वादित्यत्र विरुद्धहेतावतिव्याप्ति:, तथाहि— साध्याभावाधिकरणे पटे घटेपटोभयत्वस्य हेतुतावच्छेदकपर्याप्तिसम्ब-न्धेनासत्त्वात्, उभयत्वस्योभयत्रैव पर्याप्तत्वात्, तदाश्रयप्रत्येकैकैकपदार्थे तेन सम्ब-न्धेनासत्त्वात्। पटो न घटपटोभयमितीति। पटो न घटपटोभयमिति प्रतीतोसम-वायेनोभयत्वस्यं भानाङ्गीकारे पटेपि तादृशोभयत्वस्य सत्त्वाद्विषयबाधेन तस्य प्रमात्वानुपपत्तिप्रसङ्गेन पर्याप्तिसम्बन्धेनैव तत्प्रतीतावुभयत्वस्य भानमङ्गीकार्यम्, तथाचपर्याप्ति: उभयत्वाश्रययावत्पदार्थानुयोगिनी उभयत्वादिप्रतियोगिनीचेति सिद्धमिति भाव:। साध्यसमानाधिकरणत्वेति। साध्याधिकरणनिरूपितहेतुता-वच्छेदकसम्बन्धावच्छिन्नवृत्तित्वस्यदलान्तरस्य निवेशे साध्याधिकरणघटनिरूपित-पर्याप्तिसम्बन्धावच्छिन्नवृत्तित्वस्य तादृशोभयत्वेऽसत्त्वान्नातिव्याप्ति:। समवाय-सम्बन्धेननिरुक्तोभयत्वहेतुकस्थले साध्याभाववत्पटादिवृत्तित्वस्यैवहेतौ सत्त्वेन नातिव्याप्तिप्रसक्ति:। नच समुदायस्य प्रत्येकानतिरिक्तत्वेन उभयवृत्त्युभयत्वे प्रत्येकपटादिवृत्तित्वस्याप्यव्याहतत्वेन साध्याभाववद्वृत्तित्वस्यैव सत्त्वेन पूर्वोक्तस्थले-ऽतिव्याप्तिदानमेवासङ्गतमिति वाच्यम्, एकधर्मावच्छिन्नाधेयताया ऐक्याङ्गीकारेण

वह्न्यभावदह्रदादिनिरूपितद्रव्यत्वावच्छिन्नवृत्तितामादायाव्याप्तिवारणाय साध्याभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वस्य निवेशनियतया प्रकृते घटत्वाभाववत्वपटनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वस्य पूर्वोक्तोभयत्व हेतावभावेनाति व्याप्तिसङ्गतेः (उभयत्वमुभयत्रैव पर्याप्तं नत्वेकत्रेति वाक्यस्यार्थक्रम इत्थम्, उभयत्वमुभयानुयोगिकपर्याप्तिप्रतियोग्येव, नतु तादाश्रयप्रत्येकानुयोगिकपर्याप्तिप्रतियोगीति यथाश्रुतोऽर्थः। समुदायस्य प्रत्येकानतिरिक्ततामङ्गीकुर्वतां प्राचां सिद्धान्ते उभयत्वमुभयत्रैव पर्याप्तमित्यस्य उभयत्वमुभयत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगीत्यर्थः, नत्वेकत्रेत्यस्य एकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वाभाववदुभयत्वमित्यर्थो ग्राह्यः) तथाहि– वह्निमान् धूमादित्यदौ वह्न्यभावाधिकरणह्रदादिनिरूपितद्रव्यत्वावच्छिन्नवृत्तितानिरूपकतावच्छेदकत्वस्य तादृशनिरूपकताया अन्यूनानतिप्रसक्ते द्रव्यत्वादावेवाङ्गीकारेण सध्याभाववद्ह्रदादिगतैकत्वस्य तदनवच्छेदकतया तादृशैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य धूमे सत्त्वात्समन्वयः। एकत्वावच्छेदेन उभयत्वस्याविद्यमानतया साध्याभाववत्पटनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य घटपटोभयत्वे सत्त्वेन घटत्ववान् घटपटोभयत्वादित्यत्रातिव्याप्तिसङ्गतिः। नच धूमवान् वह्नेरित्यत्र धूमाभाववदयोगोलकनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य धूमे सत्वादतिव्याप्तिः वह्नित्वावच्छिन्नवृत्तितानिरूपकतावच्छेदकत्वस्य अयोगोलकनिष्ठैकत्वादावनङ्गीकारादिति वाच्यम्, तादृशायोगोलकनिष्ठैकत्वावच्छिन्ननिरूपकताकां तद्वह्नित्वावच्छिन्नवृत्तितामादायातिव्याप्तेर्वारणात्। एवं द्रव्यं सत्त्वादित्यत्रापितद्गुणवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधेयतामादायातिव्याप्तिः वारणीया। नच साध्याभाववन्मात्रवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य व्याप्तित्वाङ्गीकारेणैव द्रव्यत्वावच्छिन्नाधेयतामादायवह्निमान् धूमादित्यादावव्याप्तेर्वारणात् साध्याभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताघटितलक्षणानुसरणे किं बीजमिति वाच्यम्, ह्रदत्वादेरपि साध्याभाववदितरनिरूपितप्रमेयत्वावच्छिन्नवृत्तिताश्रयत्वेन साध्याभाववन्मात्रवृत्ति धर्माप्रसिद्ध्याऽसम्भवप्रसङ्गात्। नचैवं साध्यसामानाधिकरण्यनिवेशेपि समुदायस्य प्रत्येकानतिरिक्ततया घटत्ववान् घटपटोभयत्वादित्यत्र साध्याधिकरणघटनिरूपितवृत्तितामादयातिव्याप्तितादवस्थ्यमिति वाच्यम्, साध्यवन्निष्ठिकत्वावच्छिन्ननिरूपकताकवृत्तित्वस्यैव तदर्थत्वात्, तत्र तस्याभावान्नातिव्याप्तिः। नच पृथिवी घटपटोभयत्वादित्यत्राव्याप्ति, साध्यवद्घटादिनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तितायास्तादृशोभयत्वहेतावभावादिति वाच्यम्, साध्यवन्मात्रवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वस्यैव तदर्थत्वात्,

अत्र साध्यवन्मात्र वृत्तित्वं न साध्यवदितरावृत्तित्वम्, साध्यवदितरनिरूपितप्रमेयत्वावच्छिन्नवृत्तितामादाय साध्यवन्मात्रवृत्तित्वस्याप्रसिद्धत्वात्, किन्तु साध्यवन्मात्रवृत्तित्वं साध्याभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावरूपम्, तथाच पृथिवी घटपटोभयत्वादित्यत्र पृथिवीत्वाभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभाववद्घटपटोभयत्वं भवति, तदवच्छिन्ननिरूपकताकवृत्तित्वं हेतौ वर्तत इति समन्वयः। नचैवं घटत्ववान् घटपटोभयत्वादित्यत्रातिव्याप्याप्तिस्तदवस्थैव, घटत्वाभावनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभाववद्घटपटोभयत्वावच्छिन्ननिरूपकताकवृत्तित्वस्य हेतावक्षतत्वादिति वाच्यम्, साध्यवन्मात्रवृत्तिधर्मेऽव्यासज्यवृत्तित्वस्य विशेषणीयत्वात्, तादृशोभयत्वं व्यासज्यवृत्त्येवेति नातिव्याप्तिः। नच तर्हि पृथिवी घटपटोभयत्वादित्यत्राव्याप्तिः, साध्यवन्मात्रवृत्तेरव्यासज्यवृत्तेरुभयत्वरूपस्य तादृशधर्मस्यासम्भवादिति वाच्यम्, तादृशधर्मस्य घटपटान्यतरत्वस्य प्रसिद्धत्वेनतद्धर्मावच्छिन्ननिरूपकताकवृत्तितायास्तादृशोभयत्वे सत्त्वेनाव्याप्त्यभावात्। अव्यासज्यवृत्तेरन्यतरत्वादेरपि उभयत्वनिष्ठवृत्तितानिरूपकतावच्छेदकत्वमङ्गीकृतम् (अन्यथा, पटत्वावच्छिन्नानुयोगिताकपर्याप्तिसम्बन्धेन घटत्वावच्छिन्ने द्वित्वप्रकारकस्य घटावितिप्रत्ययस्य प्रमात्वं स्यात्)।

**केचित्तु, निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या विशेषणताविशेषसम्बन्धेन यथोक्तसम्बन्धेन निवाच्छिन्नाधिकरणता तदाश्रयव्यक्त्यवर्तमानं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वं तद्धर्मवत्त्वं विवक्षितम्। धूमवान् वह्नेरित्यादौ पर्वतादिनिष्ठवह्न्यधिकरणताव्यक्तेः धूमाभावाधिकरणावृत्तित्वेपि अयोगोलकनिष्ठवह्न्यधिकरणताव्यक्तेरतथात्वान्नातिव्याप्तिरित्याहुः।।**

यद्धर्मावच्छिन्नाधिकरणत्वमिति। यद्धर्मावच्छिन्नाधिकरणतासामान्ययमित्यर्थः। सामान्यपदाभावे पर्वतादिनिष्ठवह्न्यधिकरणतायां धूमाभावाधिकरणावृत्तित्वसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिः, तन्निवेशेतु अयोगोलकनिष्ठवह्न्यधिकरणताव्यक्तेरपि सामान्यान्तर्गततया नातिव्याप्तिः। इदं वह्निमद्गगनादित्यत्र हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नगगनत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया अप्रसिद्ध्यैव नातिव्याप्तिः। विशिष्टसत्तात्वावच्छिन्नाधिकरणतासामान्यस्यसाध्याभाववद्गुणाद्यवृत्ति-

---

केचित्तुकल्पे। यत्तच्छब्दघटितत्वेनाननुगमवारणायानुगमः क्रियते। तथाहि- हेतुताविशिष्टधर्मवत्त्वं लक्षणम्, धर्मे हेतुता वैशिष्ट्यञ्च स्वावच्छेदकत्वस्वविशिष्टाधेयताविशिष्टत्वोभयसम्बन्धेन, आधेयतायां स्ववैशिष्ट्यञ्च) स्वावच्छेदक-

त्वेन द्रव्यं विशिष्टसत्त्वादित्यत्र नाव्याप्तिः। द्रव्यत्वाधिकरणतासामान्यस्य सत्ताऽभावाधिकरणसामान्याद्यवृत्तित्वेन सत्तावान् द्रव्यत्वादित्यत्र नाव्याप्तिः। घटत्ववान् घटपटोभयत्वादित्यत्र पर्याप्तिसम्बन्धावच्छिन्नतादृशोभयत्वत्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः साध्याभाववत्पटाद्यवृत्तित्वेनातिव्याप्तिवारणाय साध्यसामानाधिकरण्यं निवेशनीयमेव। कपिसंयोगाभाववान् कपिसंयोगिभिन्नं वा गुणत्वादित्यादौ पूर्वोक्तस्थलान्तरेषु च दोषतत्समाधानादिकं पूर्ववदेव ग्राह्यम्। तादृशवृत्तित्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नत्वं साध्याभाववद्वृत्तित्वनिष्ठप्रतियोगितायां न निवेशनीयम्, तद्वारणीयदोषाणामभावात्। तथाच सामान्यपदस्य व्यापकत्वार्थकतया यद्धर्मावच्छिन्नाधिकरणतात्वव्यापकः साध्याभाववद्वृत्तित्वाभावः तद्धर्मवत्त्वं निष्कृष्टलक्षणं ग्राह्यम्, अन्यथा एतद्रूपवानेतद्रसादित्यादौ एकव्यक्तिहेतुकस्थले क्षणभेदेनाधिकरणताभेदानङ्गीकर्तृमते तदधिकरणतासामान्याप्रसिद्ध्याऽव्याप्तिः स्यात्॥

**अन्येतु, हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नस्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तद्वृत्तिनिरुक्तसाध्याभाववत्त्वविशिष्टयथोक्तसम्बन्धावच्छिन्नाधिकरणतात्वकत्वमिति विशेषणविशेष्यभावव्यत्यासे तात्पर्यम्। स्वपदं हेतुपरम्। इत्थञ्च कपिसंयोगाभाववान् सत्त्वात् कपिसंयोगि-**

---

सम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन, आधेयता वैशिष्ट्यञ्च स्वनिरूपिताधिकरणतात्वविशिष्टसाध्याभाववद्वृत्तित्वाभावकत्वसम्बन्धेन, अधिकरणतात्ववैशिष्यञ्च तादृशवृत्तित्वाभावे स्वव्यापकत्वसम्बन्धेन बोध्यम्॥

अन्येतुकल्पे अनुगमप्रकारः। पदार्थविशिष्टत्वं लक्षणम्, पदार्थवैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टसाध्याभावाधिकरणतात्वकत्वोभयसम्बन्धेन, अत्र स्वपदं हेतुपरम्, स्ववैशिष्ट्यञ्च तादृश्याधिकरणतात्वे स्वविशिष्टहेतुताविशिष्टत्वसम्बन्धेन, स्ववैशिष्ट्यञ्च हेतुतायां स्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन, हेतुता वैशिष्ट्यञ्च स्वविशिष्टधेयताविशिष्टित्वसम्बन्धेन स्ववैशिष्ट्यञ्चाधेयतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन, आधेयतावैशिष्ट्यञ्च स्वनिरूपिताधिकरणताविशिष्टनिरवच्छिन्नाधिकरणताविशिष्टान्यत्वसम्बन्धेन, अधिकरणतावैशिष्ट्यञ्च निरवच्छिन्नाधिकरणतायां स्वसामानाधिकरण्यसम्बन्धेन, अधिकरणताविशिष्टान्यत्वमित्यत्र वैशिष्ट्यं आधेयत्वसम्बन्धेन। अतः एकैकव्यक्तिबोधकस्वपदघटितत्वेपि लक्षणस्य नाननुगमः॥

ननु साध्याभाववदवृत्तित्वमित्यनेन साध्यनिष्ठप्रतियोगिताकाभावसमुदायाधिकरणनिरूपितवृत्तित्वाभावरूपलघुलक्षणं विवक्ष्यते, तथाचात्र प्रतियोगितायां

भिन्नं गुणत्वादित्यादावपिनाव्याप्तिरित्याहुरिति संक्षेपः।।

इति प्रथमलक्षणं समाप्तम्

अन्येत्विति। हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नस्वनिष्ठाधेयतानिरूपिताधिकरणताश्रयवृत्तियन्निरवच्छिन्नाधिकरणत्वं तदवृत्ति यत् साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्न साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतात्वं तत्कं यत् स्वं तत्त्वं लक्षणं बोध्यम्। वह्नि-

---

साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वयोः (साध्यतावच्छेदकतासाध्यतानिरूपित संसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्त्योः) निवेशे प्रयोजनाभावः, वह्निमान्धूमादित्यत्र संयोगेन वह्निसामान्याभावस्यापि तत्समुदायान्तर्गततया विशिष्टाभावोभयाभावादेः समवायेन वह्न्यभावादेः घटकत्वेपि नाव्याप्तिः, धूमवान्वह्नेरित्यादावयोगोलकरूपव्यभिचारनिरूपिकाधिकरणस्य तादृशसमुदायाधिकरणतया नातिव्याप्तिः इति चेन्न, धूमवान् वह्नेरित्यादौ कालिकेन धूमाभावव्यापितत्समुदायान्तर्गततया तदधिकरणनित्यनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्त्यापत्तेः, वह्निमान् धूमादित्यत्र तत्तद्ध्रदावृत्त्यभावानां ततद्ध्रदत्वादिरूपाणामपि साध्यनिष्ठप्रतियोगिताकाभावसमुदायान्तर्गततया तदधिकरणाप्रसिद्ध्याऽव्याप्तेश्च। नच यथाश्रुतसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य साध्यनिष्ठप्रतियोगितायां निवेशेनैव निरुक्ताव्याप्त्यतिव्याप्त्योर्वारणात् पर्याप्तिसमुदायनिवेशे प्रयोजनाभाव एवेति वाच्यम्, वह्न्यधिकरणतावान् धूमादित्यत्र स्वरूपसम्बन्धेन साध्यतायां तत्तद्ध्रदावृत्त्यभानामपि तत्समुदायान्तर्गततयाऽव्याप्तेः। नच यथाश्रुतसाध्यतावच्छेदकावच्छिन्नत्वस्यापि निवेशेनैव निरुक्तव्याप्तेपिवारणात् पर्याप्तिसमुदायनिवेशो विफल एवेति वाच्यम्, घटत्वाभाववान् पटत्वादित्यादौ साध्याभावस्य घटत्वरूपतया तत्र यावत्त्वरूपसमुदायत्वाप्रसिद्ध्याव्याप्तेः। नच न्यूनेतरवारकपर्याप्तिनिवेशाभावेनस्वरूपसंयोगान्यतरसम्बन्धेन तदुभयसम्बन्धेन स्वरूपसमवायान्यतरसम्बन्धादिभिश्च घटत्वाभावाभावानां तत्तत्क्षणवृत्तित्वविशिष्टघटत्वाभावाभावानां घटत्वाभावपटत्वोभयाभावादीनां च साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिताकाभावसमुदायान्तर्गततया न तत्र साध्याभावगतसमुदायत्वाप्रसिद्धिनिबन्धनाव्याप्तेस्सम्भव इति वाच्यम्, धूमवान् वह्नेः (वह्न्यधिकरणत्वात्) इत्यादौ संयोगकालिकान्यतरसम्बन्धेन धूमाभावस्य संयोगेन वह्नि- धूमान्यतराभावस्य च तत्समुदायान्तर्गततया तदधिकरणनिरूपितवृत्तित्वाभावस्य हेतौ

मान् धूमादित्यत्र हेत्वाधिकरणवृत्तिनिरवच्छिन्नाधिकरणत्वं घटाभावाद्यधिकरणत्वमेव (नतु वह्न्यभावाधिकरणत्वम्) तत्र वह्न्यभावाधिकरणतात्वस्यासत्त्वेन समन्वयः। धूमवान् वह्नेरित्यत्र हेत्वाधिकरणायोगोलकवृत्तिनिरवच्छिन्नाधिकरणत्वं धूमाभावाधिकरणत्वमेव, तत्र साध्याभावाधिकरणतात्वस्य सत्त्वेन नातिव्याप्तिः। कपिसंयोगाभाववान् सत्त्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादौ हेत्वधिकरणगुणादिनिष्ठनिरवच्छिन्नाधिकरणत्वं घटाभावाधिकरणत्वमेव, तत्र कपिसंयोगात्मकसाध्याभावा-

---

सत्त्वादतिव्याप्तेः। नच इतरवारकपर्याप्तिनिवेशे नैवातिव्याप्तिवारणेन न्यूनवारकपर्याप्तेः वैफल्यं तदस्थमेवेति वाच्यम्, लक्षणे समुदायत्वस्य निवेशे तस्यापेक्षाबुद्धिविशेषविषयत्वरूपतया विनिगमनाविरहेण अनन्तानामपेक्षावृद्धीनां प्रवेशस्याङ्गीकर्तव्यतया न्यूनवारकपर्याप्तिद्वयनिवेषप्रयुक्तगौरवापेक्षयाऽत्रैव गौरवेणास्य लक्षणस्य परित्यागोचित्यात् ॥

ननु साध्याभाववदवृत्तित्वलक्षणघटकसाध्याभावे हेत्वसामानाधिकरण्यनिवेशेनैव समवायेन वह्न्यभावादिकं विशिष्टाभावोभयाभावादिकञ्चादायवह्निमान्धूमादित्यादौ दोषवारणसम्भवेन साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वतदीयन्यूनेतरवारकपर्याप्तिनिवेशनस्य वैफल्यम्, कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगद्रव्यत्वान्वतराभावमादायसमन्वयसम्भवेन साध्याभावाधिकरणतायां निरवच्छिन्नत्वनिवेशोपि विफल इति चेन्न, धूमवान्वह्नेरित्यत्र हेत्वसमानाधिकरण साध्यनिष्ठप्रतियोगिताकवह्निधूमान्यतराभाववद्वृत्तित्वाभावमादायातिव्याप्तेः। नच साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वनिवेशेनैव धूमवान् वह्नेरित्यत्र पूर्वोपात्तान्यतराभावस्य धर्तुमशक्यतया हेत्वसमानाधिकरणसाध्याभावस्याप्रसिद्ध्यैवातिवारणसम्भवेन न्यूनवारकपर्याप्तिनिरवच्छिन्नत्वनिवेशस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम्, तुल्ययुक्त्याकपिसंयोग्येतद्वृक्षत्वादित्यत्र निरुक्तान्यतराभावस्य धर्तुमशक्यतया हेत्वसमानाधिकरणसाध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्न प्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिवारणाय निरवच्छिन्नत्वस्याधिकरणतायां निवेशनीयत्वात्। नच तथापि न्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभाव इति वाच्यम्, हेत्वसामानाधिकरण्यघटकाधेयतायां न्यूनेतरवारकपर्याप्तिनिवेशप्रयुक्तगौरवापेक्षयाऽत्रैवपर्याप्तिद्वयनिवेशप्रयुक्तगौरवस्याल्पीयस्त्वादित्यलम् ॥

साध्याभाववदवृत्तित्वरूपयथाश्रुतलक्षणेप्यनुगमकरणे केवलान्वयिनि साध्याभावाप्रसिद्ध्याऽव्याप्तेर्नावकाशः। तथाहि– साध्यताविशिष्टत्वं लक्षणम्। वैशिष्ट्यञ्च, स्वविशिष्टाधेयताविशिष्टत्व स्वात्यन्ताभाववत्त्वेतदुभयसम्बन्धेन आधेयतायां

धिकरणतात्वस्यासत्त्वेन समन्वयः। वह्निमद्गगनादित्यत्र हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्यैवाप्रसिद्ध्या नातिव्याप्तिः। सत्तावान् द्रव्यात्वादित्यत्र हेत्वधिकरण-द्रव्यवृत्तिगुणत्वाभावाधिकरणतायां सत्ताऽभावाधिकरणतात्वस्यासत्त्वात्समन्वयः। द्रव्यं विशिष्टसत्त्वादित्यत्र हेत्वधिकरणद्रव्यनिष्ठगुणत्वाभावाधिकरणतायां द्रव्यत्वाभावाधिकरणतात्वस्याभावेन समन्वयः। घटभिन्नं घटत्वाभाववान् पटत्वादित्यादौ पटादिनिष्ठाधिकरणतायां घटत्वाधिकरणतात्वाभावेन नाव्याप्तिः। घटत्ववान् घट-पटोभयत्वादित्यादौ हेतुतावच्छेदकपर्याप्तिसम्बन्धेन हेत्वधिकरणे तदुभयत्वावच्छिन्ने घटत्वाभावाधिकरणताया असत्त्वेन अन्याधिकरणतायां घटत्वाभावाधिकरणतात्व-स्याभावेनातिव्याप्तिवारणाय साध्यसामानाधिकरण्यं निवेशनीयमे। नचैवं लक्षण-करणे कपिसंयोगाभाववान् सत्त्वादित्यादि केवलान्वयिस्थलेपि समन्वयसम्भवेन केवलान्वयिन्यभावादित्युत्तरग्रन्थविरोध इति वाच्यम् तत्र केवलान्वयिपदस्य व्याप्य-वृत्तिज्ञेयत्ववाच्यत्वादिकेवलान्वयिसाध्यकहेतुपरत्वेन व्याख्येयतयाऽसङ्गत्यभावात्। व्याप्यवृत्तिकेवलान्वयिसाध्यकस्थलेषु साध्याभावाप्रसिद्ध्या उत्तरग्रन्थसङ्गतेः ॥

इति श्रीमदान्ध्रदेशविद्योतमान तेनालि संस्कृतकलाशालायां तर्कालङ्कारशास्त्राध्यापकेन
कुरुगंटुयपाख्य श्रीरामशास्त्रिणा न्यायशास्त्रव्युत्पित्सूनां सुखावबोधाय विरचिते
श्रीमथुरानाथीयपञ्चलक्षणीव्याख्यानरूपे पञ्चलक्षणीसर्वस्वे
प्रथमलक्षणं समाप्तम् ॥



---

स्ववैशिष्ट्यञ्च, स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छेदकधर्मावच्छिन्नत्वोभय-सम्बन्धेन आधेयतावैशिष्ट्यञ्च, स्वनिरूपिताधिकरणतासामानाधिकरण्यसम्बन्धेन (स्वविशिष्टाधेयताविशिष्टत्वसम्बन्धनिवेशनेन साध्यसामानाधिकरण्यलाभः) स्वा-त्यन्ताभावेत्यचाभावः स्वविशिष्टप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धावच्छिन्नप्रति-योगिताको ग्राह्यः। प्रतियोगितायां स्ववैशिष्ट्यञ्च, स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन (अनेन साध्याभाववदवृत्तित्वलाभः) इत्थञ्च स्वविशिष्टप्रतियोगितेत्यत्र स्वपदेन न वाच्यत्वादिनिष्ठा साध्यता ग्रहीतुं शक्यते, स्वविशिष्टप्रतियोगिताया अप्रसिद्धत्वात्, किन्तु घटत्वादिनिष्ठाधेयत्वादीनां परि-ग्रहे तद्विशिष्टप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धस्य वाच्यत्वादिनिष्ठसाध्यताया व्यधिकरणतया तेन सम्बन्धेन तदभावः केवलान्वयी, अतः केवलान्वयिसाध्यकेपि तत्सत्त्वममव्याहतम् ॥

श्री गणपतये नमः

# पञ्चलक्षणीसर्वस्वे

## द्वितीयलक्षणारम्भः

**लक्षणान्तरमाह । साध्यवद्भिन्नेति ।।**

पूर्वपूर्वकल्पेषु दोषप्रसक्तौ तद्वारणायोत्तरोत्तरकल्पानुसरणं शास्त्रे दृश्यते, अत्र पूर्वलक्षणे दोषप्रसक्त्यभावेनाह । लक्षणान्तरमिति । तथाचात्र ग्रन्थे व्याप्यहेतूनां पञ्चापि लक्षणानि सम्भवन्तीत्याशयेनैव लक्षणपञ्चकमुपदर्श्यते, नतु पूर्वपूर्वलक्षणेषु दोषोद्भावनयेति भावः जगदीशीयपञ्चलक्षण्यादिषु दीधितिकृतन्मतानुसारेण पूर्वपूर्वलक्षणेषु दोषोद्भावनेनैव उत्तरोत्तरलक्षणानुसरणं कृतम्, यथा प्रथमलक्षणे कपिसंयोगी एतद्वृक्षत्वादित्यत्र अव्याप्तिप्रदर्शनपूर्वकं द्वितीयलक्षणानुसरणं कृतम्, अधिकरणभेदेनाभावभेदानङ्गीकारेण पूर्वोक्तस्थलएवाव्याप्तिं प्रदर्श्य तृतीयलक्षणमनुसृतम्, एवमेवोत्तरलक्षणद्वयानुसरणे च बीजमुपदर्शितम् । मधुरानाथेन तु प्रथमलक्षणे साध्याभावाधिकरणतायां निरवच्छिन्नत्वनिवेशनेन पूर्वोक्तस्थलेऽव्याप्तेर्वारणेन नात्र पूर्वत्र लक्षणे दोषप्रसक्त्या उत्तरलक्षणानुसरणमितिवक्तुं शक्यते, एवमेवोत्तरत्रापि ग्राह्यम् ।।

**साध्यवद्भिन्नो यस्साध्याभाववान् तदवृत्तित्वमित्यर्थः । कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तेर्वारणाय साध्यवद्भिन्नेति साध्याभाववतो विशेषणमिति प्राञ्चः । तदसत्, साध्याभाववदित्यस्य व्यर्थताऽपत्तेः। साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वात् ।।**

साध्याभाववतो विशेषणमिति । कपिसंयोगाभावस्याव्याप्यवृत्तित्वेन कपिसंयोगाभावाधिकरणवृक्षवृत्तितामादाय कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्तेर्वारणाय साध्यवद्भिन्नत्वं साध्याभाववतो विशेषणं कार्यम्, तथाचाव्याप्तवृत्तेरभावस्याव्याप्यवृत्तित्वेपि अव्याप्यवृत्तिमद्भेदस्य व्याप्यवृत्तितया वृक्षे तस्यासत्त्वान्नाव्याप्तिरिति, तथाचात्र लक्षणे साध्याभावाधिकरणतायां निरवच्छिन्नत्वमनुपादेयमिति भावः ।।

तदसदिति । तथाचात्रकर्मधारयसमासेन साध्यवद्भिन्नाभिन्नो यस्साध्याभाववान् तन्निरूपितवृत्तित्वाभावो व्याप्तिरितिलभ्यते, तथाच साध्यवद्भिन्ननिरूपितवृत्ति-

त्वाभावरूपलक्षणस्यात्रलक्षणेऽनुप्रविष्टत्वेन साध्याभाववत्पदस्य व्यर्थतया साध्यवद्भिन्नसाध्याभावघटितलक्षणे व्यर्थविशेषणघटितत्वरूपदोषापत्तिः, तथाहि–स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्त्वंव्यर्थविशेषणघटितत्वम्, स्वसमानाधिकरणः स्वभिन्नो यस्साध्यव्याप्यतावच्छेदकधर्मः तद्घटितत्वमित्यर्थः, यथा वह्निमान् नीलधूमादित्यत्रनीलधूमत्वसमानाधिकरणनीलधूमत्वभिन्नवह्निव्याप्यतावच्छेदकधूमत्वघटितत्वेन नीलधूमत्वस्व व्यर्थविशेषण घटितत्वं तथाऽत्रापि साध्यवद्भिन्नाभिन्नसाध्याभाववद्वृत्तित्वाभावत्वस्य एतत्समानाधिकरणेन एतद्भिन्नेन व्याप्यहेतुनिष्ठेतरभेदरूपसाध्यव्याप्यतावच्छेदकेन (व्याप्यहेतवः इतरभिन्नाः साध्यवद्भिन्ननिरूपितवृत्तित्वाभवादित्यनुमानप्रयोगोऽत्र ग्राह्यः) साध्यवद्भिन्ननिरूपिवृत्तित्वाभावत्वेन घटितत्वात् साध्यवद्भिन्नसाध्याभावघटितप्रथमाभावत्वस्य व्यर्थविशेषणघटिततत्वमुपपद्यत इति भावः। नच साध्यवद्भिन्नस्याभेदसम्बन्धेन साध्याभाववत्येव विशेषणत्वेन साक्षाद्वृत्तितायामविशेषणत्वेन साध्यवद्भिन्नाभिन्नसाध्याभाववद्वृत्तित्वाभावत्वापेक्षया साध्यवद्भिन्ननिरूपितवृत्तित्वा भावत्वस्य भिन्नतया स्वसामानाधिकरण्यविरहेण नास्य व्यर्थविशेषणघटतत्वोपपत्तिरिति वाच्यम्, साध्यवद्भिन्ननिष्ठावच्छेदकताभिन्ना साध्याभावनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकतातदनिरूपिका साध्यवद्भेदनिष्ठावच्छेदकतानिरूपिका याऽधिकरणनिष्ठाऽवच्छेदकता तद्भिन्ना वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका या वृत्तित्वनिष्ठा प्रतियोगितातनिरूपकाभावस्य व्याप्तित्वाङ्गीकारेण तादृशाभावत्वस्योभयसाधारण्येन सामानाधिकरण्यस्याक्षततया साध्याभावघटिताभावत्वस्य व्यर्थविशेषणघटित्त्वोपापत्तेः ॥

**नव्यास्तु, साध्यवद्भिन्ने साध्याभावः साध्यवद्भिन्नसाध्याभावः तद्वद्वृत्तित्वमिति सप्तमीतत्पुरुषोत्तरं मतुप्प्रत्ययः, तथाच साध्यवद्भिन्नवृत्तिर्यस्साध्याभावः तद्वदवृत्तित्वमित्यर्थः, एवञ्च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगीद्रव्यत्वादित्यादावव्याप्तिः, संयोगाभाववति द्रव्यै द्रव्यत्वस्य वृत्तेः। तदुपादानेच साध्यवद्भिन्नवृत्तिसंयोगाभावो गुणादिवृत्तिसंयोग भावएव, अधिकरणभेदेनाभावभेदात्, तद्वदवृत्तित्वान्नाव्याप्तिः॥**

साध्यवद्भिन्नसाध्याभाव इत्यत्र सप्तमीतत्पुरुषसमासमङ्गीकृत्य साध्यवद्भिन्नसाध्या भावघटिताभावत्वस्य व्यर्थविशेषणघटितत्वं वारयति। नव्या इति। साध्यवद्भिन्नवृत्तिसाध्याभाववद्वृत्तित्वाभावत्वे साध्यवद्भिन्नवृत्तित्वाभावत्वस्य कथञ्चिदप्यप्रविष्टत्वेन न व्यर्थविशेषणघटितत्वमित्याशयः। (प्रथमाभावत्वे साध्यवद्भि-

न्नवृत्तित्वस्य साध्याभावविशेषणत्वेन द्वितीयाभावत्वेसाध्यवद्भिन्नवृत्तित्वस्याभावविशेषणत्वेन अभावयोर्भेदात्यामानाधिकरण्यं तदभावत्वयोः न घटत इति न व्यर्थविशेषणघटितत्वप्रसक्तिः) अधिकरणभेदेनेति। अधिकरणभेदेनाभावभेदानङ्गीकारेण साध्यवद्भिन्नगुणादिवृत्तिसाध्याभावाधिकरणं गुणादिकमेवेति नाव्याप्तिरिति भावः। ननु साध्यवद्भिन्नवृत्तित्वस्य तादृशवृत्तित्वविशिष्टत्वस्य वा साध्याभावविशेषणत्वेन अधिकरणभेदेनाभावभेदानङ्गीकरणपक्षेपि गुणादिकमादायसमन्वयसम्भवे अधिकरणभेदेनाभावभेदाङ्गीकरणेनैव समन्वयसम्भवप्रतिपादनमनुचितमितिचेन्न, साध्यवद्भिन्नवृत्तित्वस्य साध्याभावं प्रति विशेषणत्वे उपलक्षणत्वे वा समन्वयसम्भवप्रतिपादनार्थं तथोपपादनस्योचितत्वात्। नचैवमुपलक्षणत्वपक्षे निरुक्तरीत्या लक्षणस्य व्यर्थविशेषणघटितत्वसम्भव इति वाच्यम्, साध्याभावघटितलक्षणे साध्यवद्भिन्नवृत्तित्वस्य साध्याभावांशे उपलक्षणत्वेन तदघटितलक्षणे साध्यवद्भिन्नवृत्तित्वस्याभावविशेषणत्वेन च द्वयोर्भेदे न पूर्वोक्तानुपपत्त्यभावात्॥ अथवा अत्र लक्षणे साध्याभावपदवैयर्थ्यप्रसङ्गेन साध्यवद्भिन्नवृत्तित्वस्य विशेषणत्वं न सङ्गच्छते एवेति नानुपपत्तिः॥

**नच तथापि साध्यवद्भिन्नावृत्तित्वमेवास्तु, किं साध्याभाववदित्यनेनेति वाच्यम्, यथोक्तलक्षणे तस्याप्रवेशेन वैयर्थ्याभावात्, तस्यापि लक्षणान्तरत्वात्॥**

वैयर्थ्याभावादिति। प्रकृतलक्षणघटकविशेषणानां सर्वेषामपि सप्रयोजनतया व्याप्यहेत्वितरभेदानुमाने हेतुतावच्छेदकतया निर्दिष्टस्य प्रकृतलक्षणतावच्छेदकस्य न व्यर्थविशेषणघटितत्वावकाश इति भावः। ननु साध्यवद्भिन्नावृत्तित्वरूपलघुलक्षणाङ्गीकारेणैव सामञ्जस्ये साध्याभावघटितस्यास्य लक्षणत्वेगौरवमित्यत आह— लक्षणान्तरत्वादिति। तादृशस्य तृतीयस्य पञ्चमस्य च लक्षणान्तरस्य वक्ष्यमाणत्वेन न तेनास्य व्यर्थविशेषण घटितत्वशङ्कावकाशः॥

**नच तथापि साध्यवद्भिन्नवृत्तिर्यः तद्वदवृत्तित्वमेवास्तु, किं साध्याभावपदेनेति वाच्यम्, हेतोस्तादृशद्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेः॥**

**साध्याभावेत्यत्र साध्यपदमप्यतएव, द्रव्यत्वादरपि द्रव्यत्वाभावाभावत्वात्, भावरूपाभावस्य अधिकरणभेदेन भेदाभावात्॥**

अतएवेति। साध्यवद्भिन्नवृत्तिर्योऽभाव इत्युक्तौव्यत्ववारणेपि अधिकरणभेदेन

---

वस्तुतस्तु, एतल्लक्षणप्रविष्टसाध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे अव्याप्यवृत्त्यभावस्यैवाधिकरणभेदेन भेदोपगमे सम-

भेदरहितं द्रव्यत्वरूपभावात्मकद्रव्यत्वाभावाभावमादायाव्याप्तेर्वारणाय साध्यप्रतियोगिताकत्वमभावेनिवेशनीयमिति भाव:। भावभिन्नाभावस्याधिकरणभेदेन भेदाङ्गीकारेण साध्यवद्भिन्नह्रदादिवृत्तेः समवायेन वह्न्यभावादेः महानसीयवह्न्यभावादेर्वा ह्रदादेरेवाधिकरणत्वेन वह्निमान्धूमादित्यादावव्याप्त्यसम्भवेन प्रतियोगितायां साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकत्वाभावेन साध्यप्रतियोगिकत्वमात्रमेवाभावे निवेशनीयमिति भाव:। साध्यवद्भेदः साध्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदः, तत्र साध्यनिष्ठावच्छेदकतायां साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वे विशेषणीये, अन्यथा संयोगेन द्रव्यस्याप्याप्यवृत्तितया समवायेन वह्निमद्भिन्नेपर्वतादौ वर्तते यस्संयोगेन वह्न्यभावः तमुपादाय तथैव महानसीयवह्निमद्भिन्ने पर्वतादौ वर्तते यस्संयोगेन वह्न्यभावः तमुपादाय च वह्निसाध्यकधूमहेतावव्याप्तिः।। साध्यनिष्ठावच्छेदकतायां न्यूनेतरवारकपर्या-

---

वायेन वह्न्यभावमादाय तत्रैव साध्यतावच्छेदकावच्छिन्नत्वानिवेशे संयोगेनमहानसीयवह्न्यभावञ्चादाय वह्निमान्धूमादित्यत्राव्याप्तिरतस्तन्निवेशः। साध्यतावच्छेदकतायाः न्यूनवारकपर्याप्त्यनिवेशेवह्निघटान्यतरवान्धूमादित्यत्र घटाभावमादायाव्याप्तिः। इतरवारकपर्याप्त्यनिवेशे महानसीयवह्न्यभावमादाय च वह्निमान्धूमादित्यत्राव्यप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि न्यूनेतरवारकपर्याप्तिघटितं बोध्यम्। न्यूनवारकानिवेशे स्वरूपसंयोगान्यतरसम्बन्धेन वह्निसाध्यकधूमहेतौ स्वरूपसम्बन्धेन वह्न्यभावं इतरवारकानिवेशे संयोगेनवह्निसाध्यकधूमे महानसीयवह्निप्रतियोगिकसंयोगेन वह्न्यभावमादायचाव्याप्तिः, अतस्तन्निवेशः। भावभिन्नस्य अभाव मात्रस्य अधिकरणभेदेन भेदस्वीकारेतु साध्यतावच्छेदकावच्छिन्नत्वगर्भे न्यूनवारकानिवेशे पृथिवीत्वाभावद्रव्यत्वाभावान्यतर साध्यके जलत्वादिहेतौ द्रव्यत्वाभावत्वावच्छिन्नाभावरूपं द्रव्यत्वमादायाव्याप्तिः। तत्रैवेतरवारकानिवेशे द्रव्यत्वसमनियतत्वेन द्रव्यत्वस्वरूपं पृथिवीत्वाभावद्रव्यत्वाभावोभयाभावमादायाव्याप्तिः, अतस्तन्निवेशः। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वगर्भेच न्यूनवारकपर्याप्त्यनिवेशे स्वरूपकालिकान्यतरसम्बन्धेन द्रव्यत्वाभावसाध्यकघटत्वहेतौ द्रव्यत्वाभावस्य यस्स्वरूपेणाभावः द्रव्यत्वरूपः तमुपादायाव्याप्तिः। इतरवारकपर्याप्त्यनिवेशे कालिकेनद्रव्यत्वाभावसाध्यकघटत्वहेतौ गुणानुयोगिककालिकस्वरूपान्यतरसम्बन्धावच्छिन्ना या द्रव्यत्वाभावत्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभावं द्रव्यत्वरूपमादायाव्याप्तिः, अतस्तन्निवेश इति तु विभावनीयम्।।

प्तिघटितमेव साध्यतावच्छेदकावच्छिन्नत्वं निवेशनीयम्, न्यूनवारकानिवेशे घटत्व-संयोगान्यतरसाध्यके द्रव्यत्वहेतौ घटत्ववद्भिन्ने पटादौ विद्यमानं साध्याभावमादायाव्याप्तिः, अतस्तन्निवेशः। इतरवारकपर्याप्त्यनिवेशे संयोगसाध्यके द्रव्यत्वहेतौ घटसंयोगवद्भिन्ने वर्तमानं संयोगाभावमादायाव्याप्तिः, अतस्तन्निवेशः। एवमेव तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि न्यूनेतरवारकपर्याप्तिघटितं बोध्यम्, न्यूनवारकानिवेशे विषयत्वसमवायान्यतरसम्बन्धेन संयोगसाध्यके द्रव्यत्वहेतौ विषयतासम्बन्धेन संयोगवत् ज्ञानभिन्ने घटादौ विद्यमानं संयोगाभावमादायाव्याप्तिः, अतस्तदुपादानम्। इतरवारकानिवेशे संयोगी द्रव्यत्वादित्यत्र पटानुयोगिकसमवायेन संयोगवद्भिन्ने वृक्षे विद्यमानं संयोगाभावमादायाव्याप्तिः, अतस्तन्निवेशः ॥

**ननु तथापि घटाकाशसंयोगघटत्वान्यतराभाववान् गगनत्वादित्यत्र घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावस्य गगने सत्त्वात्सद्धेतुतयाऽव्याप्तिः, साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य घटाकाशसंयोगरूपस्य गगने सत्त्वात् तत्र च हेतोर्वृत्तेः। न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विवक्षितमिति वाच्यम्, साध्याभावपदवैयर्थ्यापत्तेः, साध्यवद्भिन्नवृत्तित्वविशिष्टपदवृत्तित्वस्यैव सम्यक्त्वादितिचेन्न। अभावाभावस्यातिरिक्ततामतेनैतल्लक्षणकरणात्, तथाचाधिकरणभेदेनाभावभेदात्साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य प्रतियोगिव्यधिकरणस्य प्रतियोगिमति गगनेऽसत्त्वादव्याप्तेरभावात् ।।**

यद्धेत्वधिकरणे सर्वत्रापि साध्यं वर्तेते स हेतुस्सद्धेतुः। हेत्वधिकरणे गगने घटत्वाभावः स्वतस्सिद्धएव, घटाकाशसंयोगस्य सत्त्वेपि तस्याव्याप्यवृत्तितया घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावोपि गगनेऽस्तीति तदन्यतराभावस्य तत्राक्षततयाऽत्र गगनत्वस्य सद्धेतुत्वमिति भावः। अत्र तादृशान्यतरान्तर्गतस्य घटत्वस्य नियतं घटे सत्त्वेन तादृशान्यतराभाववद्भेदाधिकरणे घटे विद्यमानस्य भावरूपस्य तदन्यतराभावाभावस्य तदन्यतरस्वरूपत्वेन तदन्तरान्तर्गतघटाकाशसंयोगस्याधिकरणे गगने हेतोस्सत्त्वादव्याप्तिरिति भावः। साध्यतावच्छेदककोटौ घटाकाशसंयोगस्याप्रवेशे (घटत्वाभावमात्रस्य साध्यत्वे) घटत्वाभाववद्भिन्ने घटे गगनत्वहेतोरवृत्त्यानाव्याप्तिरिति घटाकाशसंयोगस्य तत्र प्रवेशः। अत्र साध्यकोटौ घटत्वस्याप्रवेशे तत्राव्याप्तेः केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैव वक्ष्यमाणतया इदानीं तदुद्भावनासङ्गतेः ॥

ननु गगनस्य विभुतया साध्यवद्भिन्ने घटे घटसंयोगस्य आकाशसंयोगस्य वा (घटाकाशसंयोगरूपस्य) सत्त्वेन घटसंयोगघटत्वान्यतराभावाभावाकाशसंयोग-घटत्वान्यतराभावाँभावयोः सिद्धत्वेन तदधिकरणे गगने हेतोर्वृत्तेरेवाव्याप्तिसम्भवेन केवलघटसंयोगस्य केवलाकाशसंयोगस्य वा साध्यकोटावनुप्रवेशेनैव सामञ्जस्ये घटाकाशपर्यन्तानुसरणं व्यर्थमितिचेन्न, केवलस्य प्रवेशेपि घटाकाशसंयोगमादायैव दोषो वक्तव्य इत्याशयेनैव तस्य साध्यकोटावनुप्रवेशात् ॥

साध्यवद्भिन्नवृत्तित्वविशिष्टेति । घटवृत्तित्त्वविशिष्टसाध्याभावाधिकरणं घट एवेति तत्र हेतोरवृत्त्या नाव्याप्तिरिति भावः । अभावाभावस्यातिरिक्ततेति । तथाच तदन्यतराभावाभावस्यातिरिक्तत्वेऽधिकरणभेदेनाभावभेदाङ्गीकरणेन साध्यवद्भिन्नघट वृत्तिसाध्याभावाधिकरणं घटएवेति नाव्याप्तिरिति भावः ॥

**नचैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यम्, अभावाभावस्यातिरिक्तत्वेन द्रव्यत्वादेरभावाभावत्वविरहात्, साध्यवद्भिन्नवृत्तिघटाभावादेस्तु हेतुमत्यसत्त्वात्, अधिकरणभेदेनाभावभेदादिति वाच्यम् । यत्र प्रतियोगिसमानाधिकरणत्व प्रतियोगिव्यधिकरणत्व लक्षणविरुद्धधर्माध्यासः, तत्रैवाधिकरणभेदेनाभाव-भेदावभेदाभ्युपगमो नतु सर्वत्र, तथाच साध्यवद्भिन्नवृत्तिघटाभावादेः हेतु-मत्यसत्त्वादसम्भववारणाय साध्यपदोपादानात् ।।**

नचैवमिति । एवं अभावाभावस्यातिरिक्तत्वाङ्गीकार । अभावाभावस्यातिरि-क्तत्वे नेति । द्रव्यत्वाभावाभावस्यातिरिक्तत्वेन द्रव्यत्वादावभावत्वविरहेण भाव-भिन्नस्य घटाभावादेः अधिकरणभेदेन भेदस्य सुतरामङ्गीकृतत्वेन च साध्यवद्भिन्न-वृत्त्यभावपदेन द्रव्यत्वा भावाभावं घटाभावादिकं वाऽदायाऽव्याप्त्यभावेन अभावे साध्यप्रतियोगिकत्वनिवेशनमनर्थकमित्याशयः । विरुद्धधर्माध्यासस इति । प्रतियोगि-समानाधिकरणत्वप्रतियोगिव्यधिकरणत्व (प्रतियोग्यनधिकरणवृत्तित्व) लक्षणविरुद्ध-धर्माध्यासस्थलएवाधिकरणभेदेनाभावाभेदाभ्युपगमेन कपिसंयोगाभावाद्यव्याप्यवृत्त्य-भावेष्वेव निरुक्तविरुद्धधर्माध्याससम्भवेन अव्याप्य वृत्त्यभावानामेवाधिकरणभेदेन भेदोऽङ्गीक्रियते, नतु घटाभावादिव्याप्यवृत्त्यभावानां, अतस्साध्यवद्भिन्नवृत्त्यभाव-पदेन घटाभावादिकमादायाव्याप्तिवारणाय साध्यपदमुपादेयमिति भावः ॥

**यद्वा, घटाकाशसंयोगघटत्वान्यतराभावाभावोऽतिरिक्तः, घटाकाशसंयोग-घटत्वादीनामननुगतत्वात् । घटत्वद्रव्यत्वाद्यभावाभावस्तु नातिरिक्तः, घटत्व-द्रव्यत्वादि नामनुगतत्वात् । तथाच द्रव्यत्वादिकमादायासम्भववारणायैव साध्य-दरमित्याहुरित्यास्तां विस्तरः।।**

**इति द्वितीय लक्षणं समाप्तम् ।।**

प्रकारान्तरेण द्रव्यत्वादिकमादायैव साध्यपदं सार्थकयति। यद्वेति। अननुगततयेति। घटाकाशसंयोगघटत्वान्यतराभावाभावस्य तदन्यतररूपत्वेन वक्तव्यतया तदन्यतरस्यचानन्ततत्संयोगघटात्वरूपतया नानुगत्वं (नैकपदार्थरूपत्वं) अननुगतत्वेन तदन्यतराभावाभावावस्यातिरिक्तात्वमेवाङ्गीक्रियते, अतस्तदभावस्थाधिकरणभेदेनभेदः। द्रव्यत्वाभावाभावादीनान्तु द्रव्यत्वाद्यनुगतधर्मरूपतयाऽतिरिक्तत्वाभावेनाधिकरणभेदेन भेदानङ्गीकारेण द्रव्यत्वाभावाभावादिकमादायाव्याप्तिवारणाय साध्यपदस्य सार्थक्यं वक्तव्यमिति भावः॥

इति श्रीमत्कुरुगंटुचपाख्य श्रीरामशास्त्रि विरचिते
पञ्चलक्षणीसर्वस्वे द्वितीय लक्षणं समाप्तम्॥



श्रीगणपतयेनमः

# पञ्चलक्षणीसर्वस्वे

## तृतीयलक्षणारम्भः

**साध्यवत्प्रतियोगिकान्योन्याऽभावेति हेतौ साध्यवत्प्रतियोगिताकान्योन्याभावाधिकरण वृत्तित्वाभाव इत्यर्थः ।।**

**अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेन विशेषणीयः, तेन साध्यवती व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तावपि नासम्भवः ।।**

साध्यवद्भेदे प्रतियोग्यवृत्तित्वविशेषणाभावे वह्निमान्धूमादित्यादौ केवलान्वयिनं महानसघटोभयभेदादिकमादायासम्भवप्रसङ्ग इति भावः। तन्निवेशेतूभयभेदादेः केवलान्वयितया प्रतियोगिन्यपि सत्त्वेन नासम्भवः ॥

**नन्वेवमपि नानाधिकरणसाध्यके वह्निमान्धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तेरव्याप्तिर्दुर्वारा। प्रतियोग्यवृत्तित्मपहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन लक्षणेन सह पौनरुक्तयमितिचेन्न, वक्ष्यमाणकेवलान्वय्यव्याप्तिवदस्याप्यत्र दोषत्वात् ।।**

तत्तव्यक्तीति। तथाच वह्निमान्धूमादित्यत्र प्रतियोग्यवृत्तिं तादृशं महानसादिगतव्यक्तिभेदमादगतयाव्याप्तिः, तस्यापिवस्तुतः साध्यवन्निष्ठप्रतियोगित्ताकभेदत्वादिति भावः। साध्यवत्त्वावच्छिन्नेति। ननु साध्यवत्त्वावच्छिन्न (साध्यनिष्ठावच्छेदकताक) प्रतियोगिताकभेदविवक्षणेपि साध्यवद्घटोभयभेदादिकमादाय पुनरप्यसम्भवसम्भवेन तद्वारणाय प्रतियोग्यवृत्तित्वस्यावश्यकत्वेन प्रतियोग्यवृत्त्वमपहायेति कथनमसङ्गतमितिवाच्यम्, साध्यवद्भेदपदेन साध्यनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकभेदस्य विवक्षणीयतया उभयभेदादेः तदतिरिक्तोभयत्वादिनिष्ठावच्छेदकतानिरूपकत्वेन निरुक्तोभयभेदादिकमादाय दोषवारणसम्भवेन प्रतियोग्यवृत्तित्वदलस्यानावश्यकत्वेन तत्परित्यागकथनस्य समञ्जसत्वात्। नच साध्यनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वपर्यन्तस्य निवेशे प्रयोजनाभावेन निरुक्तोभयभेदामादाय दोषवारणाय प्रतियोग्यवृत्तित्वदलावश्यकताऽस्त्यैवेति

वाच्यम्, तद्वह्निमात्र (महानस्यान्यवह्निमात्र) इत्यादिभेदमादाय दोषवारणाय तादृशावच्छेदकत्वानिरूपकत्वपर्यन्तस्यावश्यकत्वेन प्रतियोग्यवृत्तित्वदलवैयर्थ्यस्यदुर्वारत्वात् (साध्यनिष्ठावच्छेदकतायां साध्यतावच्छेदकधर्म सम्बन्धावच्छिन्नत्वयोः सार्थक्यं वह्निमान् धूमादित्यादौ समवायेन वह्निमान् महानसीयवह्निमान्नेत्यादिभेदमादाय दोषवारणेन बोध्यम्। न्यूनेतरवारकपर्याप्तिप्रयोजनं चोक्तप्रायम्) अस्याप्यत्र दोषत्वादिति। पञ्चसुलक्षणेषु केवलान्वयिन्यव्याप्तिरिव तृतीयलक्षणे नानाधिणकरण, साध्यकाव्याप्तेरपि दोषत्वादिति भावः ॥

**नच तथापि साध्यवत्प्रतियोगिताकान्योन्या भावमात्रस्यैवैतल्लक्ष्यणघटकत्वे वक्ष्यमाणकेवलान्वय्यव्याप्तिरत्रासङ्गता, केवलान्वयिसाध्यकेऽपि साध्याधिकरणीभूत तत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम्, तत्रापि तादृशान्योन्याभावस्य प्रसिद्धत्वेपि तद्वतिहेतोर्वृत्तेरेवाव्याप्तेर्दुर्वारत्वात् ॥**

केवलान्वयीति। इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिस्थले घटादीनामपि साध्यवत्त्वेन घटो नेत्यादिभेदानां प्रसिद्धतया केवलान्वयिन्यव्याप्तिरित्युत्तरग्रन्थो न सङ्गच्छत इति भावः। तत्रापीति। साध्यवन्निष्ठप्रतियोगिताकभेदस्यैव लक्षण घटकत्वेन साध्यवद्भेदरूपघटादिभेदानां प्रसिद्धत्वेन साध्याभावाप्रसिद्धिनिबन्धनाव्याप्त्यसम्भवेपि तदधिकरणवृत्तिताया एव हेतौ सत्त्वेन प्रकारान्तरेणाव्याप्तिस्सम्भवतीति भावः ॥

**यद्वा, साध्यवत्प्रतियोगिताकान्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्यान्याभाव एव विवक्षितः। नचैवं पञ्चमाभेदः, तत्र साध्यवत्प्रतियोगिकान्योन्याभाववत्त्वेन प्रवेशः, अत्रतु तादृशान्योन्याभावाधिकरणत्वेन, इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात्। अखण्डाभावघटकतया च नाधिकरणत्वांशस्यात्र वैयर्थ्यमिति न कोपि दोष इति दिक् ॥**

इति तृतीयलक्षणं समाप्तम् ॥

साध्यवत्त्वावच्छिन्नेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नसाध्यनिष्ठावच्छेदकताकप्रतियोगिताकान्योन्याभावो विवक्षणीय इत्यर्थः (न्यूनेतरवारकपर्याप्तिगर्भनिवेशोप्यावश्यक इति भावः) प्रवेशाप्रवेशाभ्यामात्र। साध्यवद्भेदवन्निरूपितवृत्तित्वाभावः पञ्चमलक्षणम् (तत्र भेदवत्त्वेनैव भेदाधिकरणस्य प्रवेशः, नत्वधिकरणत्वेनेति भावः) साध्यवद्भेदाधिकरणनिरूपितवृत्तित्वाभावः तृतीयलक्षणम् (अत्र भेदाधिकरणत्वे नाधिकरणस्य प्रवेशः, नतु भेदवत्त्वेन)

इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यां तृतीयपञ्चमयोः भेदः (न चात्रविनिगमकाभावः तृतीयस्मिन् भेदाधिकरणत्वेन प्रवेशः, पञ्चमे भेदत्त्वेन प्रवेश इत्यत्र किं विनिगमकम्, वैपरीत्यं कुतो नस्यात् इति वाच्यम्, प्रायशः अन्तिम लक्षणे असति बाधके लक्षणकल्पनौचित्यस्यैव विनिगमकत्वात्) ननु एतल्लक्षणप्रविष्टस्याधिकरणत्वांशस्य वैयर्थ्यमित्यत आह– अखण्डाभावघटकतयेति। प्रतियोगितावच्छेदककुक्षिप्रवेशबलेन तादृशाभावसंपादनमेव फलमिति भावः। तृतीयलक्षणरूपाधिकरणत्वघटिताभावे पञ्चमलक्षणरूपाभावस्याननुप्रविष्टत्त्वेन न तेनास्य व्यर्थविशेषणघटितत्वमिति भावः। तथाच साध्यवद्भेदनिष्ठाऽवच्छेदकताका अधिकरणत्वनिष्ठावच्छेदकताका याऽधिकरणनिष्ठाऽवच्छेदकता तन्निरूपिका वृत्तितात्वनिष्ठावच्छेदकतानिरूपिका या वृत्तित्वनिष्ठा प्रतियोगिता तन्निरूपकाभावः तृतीयलक्षणम् (अत्राधिकरणत्व निष्ठावच्छेदकताप्रवेशः पञ्चमलक्षणाद्विशेषः) साध्यवद्भेदनिष्ठावच्छेदकताकायाऽधिकरणनिष्ठावच्छेदकता तन्निरूपिका वृत्तितात्वनिष्ठावच्छेदकताका या वृत्तित्वनिष्ठा प्रतियोगितातन्निरूपकाभावः पञ्चमलक्षणम् (अत्राधिकरणत्वनिष्ठावच्छेदकतायाः प्रवेशो नास्तीति भेदः)।

श्रीमतकुरुगंट्युपाख्य श्रीरामशास्त्रिविरचिते

पञ्चलक्षणीसर्वस्वे तृतीयलक्षणं समाप्तम्॥



श्रीमते नारायणाय नमः

# पञ्चलक्षणीसर्वस्वे

## चतुर्थलक्षणारम्भः

**सकलेति। साकल्यं साध्याभाववति विशेषणम्, तथाच यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतौ व्याप्तिरित्यर्थः। धूमाद्यभाववद्ध्रदादिनिष्ठाभावप्रतियोगित्वाद्वह्न्यादेरतिव्याप्तिरिति यावदितिसाध्याभाववतो विशेषणम्। साध्याभावविशेषणत्वे तत्तद्ध्रदाद्यवृत्तित्वादिरूपेण यो वह्न्यभावः तस्यापि सकलसाध्याभावमध्ये प्रवेशात्तावदधिकरणाप्रसिद्ध्याऽसम्भवापत्तेः ।।**

सकलेतीति। सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वं लक्षणम्, सकलसाध्याभाववन्तो ह्रदादयः, तन्निष्ठधूमाभावप्रतियोगित्वस्य धूमे सत्त्वात्समन्वयः। वह्न्यभावस्य सकलसाध्याभाववदन्तर्गतायोगोलकनिष्ठत्वाभावेन तत्प्रतियोगित्वमादाय धूमवान् वह्नेरित्यत्र हेतौ नातिव्याप्तिः ।। धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणेन साकल्यं सार्थकयति। यावदिति। साकल्यस्य साध्याभावविशेषणत्वे तद्ध्रदत्वरूपस्य तद्ध्रदावृत्तिः नास्तीति प्रतीतिसिद्धाभावस्य एतद्ध्रदत्वरूपस्यैतद्ध्रदावृत्तिः नास्तीतिप्रतीतिसिद्धाभावस्य एतादृश्यानामन्येषाञ्च साध्यप्रतियोगिकानाञ्च सकलसाध्याभावान्तर्गततया तावदधिकरणाप्रसिद्ध्याऽव्याप्तिः, तथाहि–तद्ध्रदनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववतः स्वरूपेण नास्तीति प्रतीतिसिद्धाभावः तद्ध्रदावृत्तित्वावच्छिन्नप्रतियोगिताकाभावः, स तद्ध्रदत्वरूपः, कुतः, तद्ध्रदनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववान् तद्ध्रदभेदः स स्वरूपसम्बन्धेन नास्तीति प्रतीतिसिद्धाभावस्य तद्ध्रदएव सत्त्वात्। इत्थञ्चतद्ध्रदनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववान् वह्न्यादिरपि भवतीति साध्यप्रतियोगिकोपि भवति, अन्ये एतद्ध्रदत्व तत्तद्ध्रदत्वादिरूपाभावा अप्येतादृशा एव, अतस्तेषां साध्यप्रतियोगिकाभावानामधिकरणाप्रसिद्ध्याऽव्याप्तिरिति। साकल्यस्य साध्याभाववद्विशेषणत्वे तु साध्याभाववतामेव सकलानामनुप्रवेशेन न सकलसाध्याभावाधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिरिति भावः। नच उत्तरत्र साध्याभावस्य साध्य-

तावच्छेदकावच्छिन्नप्रतियोगिताकाभावरूपत्वेन वक्ष्यमाणतया तत्तद्ह्रदावृत्तित्वावच्छिन्नप्रतियोगिताकाभावानां कथं लक्षण घटकत्वमिति वाच्यम्, यथाश्रुतसाध्यप्रतियोगिकाभावघटितलक्षणाभिप्रायेणतदुक्तेः। नच तर्हि साध्यतावच्छेदकावच्छिन्नत्वादिघटितलक्षणे साकल्यं साध्याभाव एव विशेषणीक्रियते नतु साध्याभावति, पूर्वोक्तदोषाभावादिति वाच्यम्। न्यूनेतरवारकपर्याप्तिघटितलक्षणे वह्निमान् धूमादित्यादौ वह्निसामान्याभावस्यैकस्यैव ग्राह्यतया तत्र साकल्या (यावत्त्वा) प्रसिद्ध्याऽव्याप्तिः, द्रव्यत्वाभाववान् गुणत्वादित्यादौ द्रव्यत्वरूपसाध्याभावे साकल्याप्रसिद्ध्याऽव्याप्तेश्च। नच साध्याभाववति साकल्यनिवेशेपि एतद्रूपाभाववान् गुणत्वादित्यादौ साध्याभावाधिकरणस्यैकत्वेन तत्र यावत्त्वाप्रसिद्ध्याऽव्याप्तिर्दुर्वारेति वाच्यम्, तादृशदोषप्रसक्तितत्समाधानयोः वस्तुतस्त्वित्यादिना उत्तरत्र वक्ष्यमाणत्वात्॥

**नच द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ सत्तादेर्विशिष्टाभावादिसत्त्वादतिव्याप्तिरिति वाच्यम्, तादृशाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकस्येह विवक्षितत्वात्॥**

नचद्रव्यमिति। द्रव्यं सत्त्वादित्यत्र व्यभिचारिहेतौ साध्याभावाधिकरणगुणादिनिविष्ठविशिष्टसत्ताऽभावप्रयोगित्वस्य सत्तायां सत्त्वादतिव्याप्तिः, "विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन विशिष्टसत्तायाश्शुद्धसत्तायाश्चैक्येन विशिष्टसत्ताऽभावप्रतियोगित्वात्सत्ताया इति भावः। विवक्षितत्वादिति। साध्याभावाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकतात्ववच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत् हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तदवच्छिन्नावच्छिन्नत्वं लक्षणमिति फलितम्, तथाच तादृशयोः वैशिष्ट्यसत्तात्वोभयगतद्वित्व सत्तात्वगतैकत्वयोः भेदेन नातिव्याप्तिः॥

**प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्न ग्राह्या, तेन द्रव्यत्वाभाववति गुणादौ सत्तादेस्संयोगसम्बन्धावच्छिन्नाभावसत्त्वेपि नातिव्याप्तिः॥**

अत्र हेतुतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्त्यनिवेशे द्रव्यं सत्त्वादित्यत्रैव संयोगसमवायोभयसम्बन्धेन घटाद्यनुयोगिकसमवायसम्बन्धेन वा सत्ता नास्तीतिप्रतीतिसिद्धाभावप्रतियोगितामादायातिव्याप्तिः। न्यूनवारकपर्याप्त्यनिवेशे-द्रव्यत्वसाध्यके संयोगसमवायान्यतरसम्बन्धेन सत्ताहेतुकस्थले संयोगसम्बन्धेनसत्ताऽभावप्रतियोगितामादायातिव्याप्तिः।

**साध्याभावश्च साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगिताको बोध्यः। अन्यथा पर्वतादेरपि वह्न्यादेर्विशिष्टाभावादिमत्त्वेन समवायादि सम्बन्धावच्छिन्नवह्न्यादिसामान्याभाववत्त्वेन च यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावाद्धूमस्यासम्भवस्स्यात् ।।**

अत्र साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकतान्यूनेतरवारकपर्याप्तिनिवेशो ग्राह्यः। अन्यथा वह्निधूमान्यतरवान् वह्नेः वह्निमान्धूमादित्यादौ यावदन्तर्गत-धूमाभावाधिकरणायोगोलकनिष्ठाभावप्रतियोगित्वाभावाद्वह्नेः यावदन्तर्गतमहानसी-यवह्न्यभावाधिकरणपर्वतादिनिष्ठाभावप्रतियोगित्वाभावाद्धूमस्य चाव्याप्तिः। अत्र साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्तिनिवेशोपि कार्यः। अन्यथा संयोगसमवायान्यतरसम्बन्धेन वह्निमान्धूमादित्यादौ च यावदन्तर्गते समवायेन वह्न्यभावाधिकरणे संयोगसमवायोभयसम्बन्धेन वह्न्यभावाधिकरणे च पर्वतादौ धूमस्य वृत्त्याऽव्याप्तिः ।।

**नच कपिसंयोग्येतद्वृक्षत्वादित्यादौ वृक्षस्यापि तादृशसाध्याभाववत्त्वेन याव-दन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरिति वाच्यम्, किञ्चि-दनवच्छिन्नायास्साध्याभावाधिकरणताया इह विवक्षितत्वात्। इत्थञ्च किञ्चिदन-वच्छिन्नायाः कपिसंयोगाभावाधिकरणताया गुणादावेव सत्त्वात् तत्र च हेतोरप्य-भावसत्त्वान्नाव्याप्तिः ।।**

अत्र सर्वं सुगमम् ।।

**नच कपिसंयोगाभाववान् सत्त्वादित्यादौ साध्याभावस्य कपिसंयोगादे-र्निरवच्छिन्नाधिकरणप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। केवलान्वयिन्यभावादित्य-नेन ग्रन्थकृतैव तद्दोषस्य वक्ष्यमाणत्वात् ।।**

नच कपिसंयोगाभावाभाववति वृक्षादौ सत्तायास्सत्त्वेन व्यभिचारप्रसङ्ग इति वाच्यम्, साध्याभावदवृत्तित्वरूपव्यभिचारघटकसाध्याभावाधिकरणतायामपि निर-वच्छिन्नत्वस्यनिवेशितत्वेन नास्य हेतोर्व्यभिचारप्रसक्तिः। अन्यत्सर्वं सुस्पष्टम् ।।

**नच पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति यावत्येव कपिसंयोगा-भावसत्त्वादतिव्याप्तिरिति वाच्यम्, तन्निष्ठपदेन तत्र निरवच्छिन्नवृत्तिमत्त्वस्य विवक्षितत्वात्, इत्थञ्च पृथिवीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निर-वच्छिन्नवृत्तिमानभावः न कपि संयोगाभावः, किन्तु घटात्यन्ताभाव एव, तत्प्रतियोगित्वस्य हेतावसत्त्वान्नातिव्याप्तिः ।।**

अत्रापि सर्वं सुगमम् ॥

**नचैवमन्योन्याभावस्य व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगवच्छिन्नत्वादित्यादेरपि सद्धेतुतया तत्राव्याप्तिः, संयोगवच्छिन्नत्वाभावस्य संयोगस्य निरवच्छिन्नवृत्तेरप्रसिद्धेः इति वाच्यम्, अन्योन्याभावस्य व्याप्यवृत्तितानियमनये अन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकस्वरूपः, किन्तु अतिरिक्तो व्याप्यवृत्तिः, अन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभावभावानुपपत्तेः, इति संयोगवच्छिन्नत्वाभावस्यापि निरवच्छिन्नवृत्तिमत्वात् ॥**

अप्रसिद्धेरिति । स्ववच्छेदाभावस्यस्वस्वरूपत्वांगीकाराभिप्रायेणसंयोगवच्छेदाभावस्यापिसंसोगरूपत्वस्याक्षततयातत्रनिरवच्छिन्नवृत्तित्वमप्रसिद्धमिति भावः । अन्यथेति । अव्याप्यवृत्तिमच्छेदाभावस्यस्वप्रतियोगितावच्छेदक स्वरूपत्वाङ्गीकारे । मूलावच्छेदेनेति । मूलावच्छेदेन कपिसंयोगिभेदाभाव मानेतुमूलावच्छेद्यत्वं कपिसंयोगिभेदाभाव एव भासते, नतुभेदे, तथाच कपिसंयोगिभेदाभावस्य कपिसंयोगरूपत्वे तत्र मूलावच्छेद्यत्वाभावेन अभ्रान्तपुरुषस्य तादृशप्रतीत्यनुपपत्तिः स्यात् यदि तस्य कपिसंयोगतोऽतिरिक्तत्वमभ्युपेयेत तर्हि व्याप्यवृत्तेरवच्छेदकसद्भावनये कपिसंयोगातिरिक्तस्य निरुक्ताभावस्य मूलावच्छेद्यत्वमप्यक्षतमिति न तद्ज्ञानस्य भ्रमत्वमित्याशयः॥ केचित्तु मूलावच्छेदेनेत्यस्य निरवच्छिन्नवृत्तिकत्वेनेत्यर्थं स्वीकुर्वन्ति, कपिसंयोगरूपत्वे तस्य तादृश्यावृत्तिकत्वमपि न सम्भवतीति तदाशयः ॥

**वस्तुतस्तुसकलपदमत्राशेषपरं, नत्वनेकपरम् तथासति घटत्वाभाववान् घटत्वादित्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः। तथाच किञ्चिदनवच्छिन्नाया निरवच्छिन्नसाध्याभावाधिकरणताया व्यापकीभूतो योऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्नतात्प्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः ॥**

अशेषपरमिति । यद्धर्मावच्छिन्नवाचकपदसमभिव्याहारस्थले यावत्पदं (यावदर्थक पदं) श्रूयते तद्धर्मव्यापकत्वं विधेयांशे भासत इति नियमानुसारेण साध्याभाववत्पदसमभिव्याहृतसकलपदबलानुसारेण साध्याभावव्यापकत्वं विधेयंतत्वभावेभास्तः इति साध्याभावव्यापकीभूताभावप्रतियोगित्वं लक्षणमिति फलितम् एवञ्च तद्धटत्वभाववान् पटत्वादित्यत्र तद्धटरूपस्यसाध्याभावाधिकरणस्यैकत्वेऽपि न यावत्त्वाप्रसिद्धिनिबन्धनाव्याप्तिः॥

**नच सत्तादिसामान्याभावस्यापि प्रमेयत्वादिना निरुक्तसाध्याभावाधिकर-**

**णता व्यापकत्वात् द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वमित्युक्तौ तु निर्धूमत्ववान् निर्वह्नित्वादित्यादावव्याप्तिः, निर्वह्नित्वाभावानां वह्निव्यक्तिनां सर्वासामेव चालिनीन्यायेन निर्धूमत्वाभावाधिकरणतावन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम्, तादृशाधिकरणताव्यापकतावच्छेदकं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात् ।।**

द्रव्यं सत्त्वादिति। तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वस्य तद्व्यापकत्वरूपत्वाभिप्रायेण प्रमेयत्वादिधर्मेण व्यापकत्वं सत्ताऽभावे सम्भवतीत्युक्तम्। व्यापकत्वमित्युक्ताविति। अयं भावः, साध्याभावाधिकरणे गुणादौ सत्ताऽभाववद्भेदस्याक्षततया तादृशभेदप्रतियोगितावच्छेदकत्वमेव सत्ताऽभावे सम्भवतीति न द्रव्यं सत्त्वादित्यत्र दोषः (निर्धूमत्वं धूमाभावः, निर्वह्नित्वं वह्न्यभावः) व्यापकतावच्छेदकमिति। निरुक्तस्थले हेत्वभावस्य तत्तद्वह्न्यादिरूपतया साध्याभावाधिकरणे चालिनीन्यायेन तत्तद्वह्निमद्भेदसम्भवेन निरुक्तव्यापकत्वासम्भवेपि यद्धर्मस्य हेतुतावच्छेदकधर्मपरतया वह्न्यभावाभावत्वरूपयद्धर्मावच्छिन्नाभावत्वे तादृशाधिकरणताव्यापकतावच्छेदकत्वं सम्भवति, साध्याभावाधिकरणे पर्वतादौ वह्न्य भावाभावोनास्तीत्यभावस्यासम्भवात्।।

**व्यापकतावच्छेदकत्वन्तु तद्वन्निष्ठात्यन्ताभाव प्रतियोगितानवच्छेदकत्वम् । ननु तद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वम् तद्वति निरवच्छिन्नवृत्तिमान् योऽभावस्तत्प्रतियोगितानवच्छेदकत्वं वा, प्रकृतव्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नत्वस्य वा प्रवेशे प्रयोजनविरहात् । तेन पृथिवी कपिसंयोगादित्यादौ नातिव्याप्तिः, कपिसंयोगाभावत्वस्य निरुक्तव्यापकतावच्छेदकत्वाभावादित्येवपरमार्थः ।।**

**इति चतुर्थलक्षणं समाप्तम् ।।**

**श्रीमत्कुरुगंटुपाख्य श्रीरामशास्त्रि विरचिते**
**पञ्चलक्षणीसर्वस्वे चतुर्थलक्षणं समाप्तम् ।।**

श्रीशिवाय नमः

# पञ्चलक्षणीसर्वस्वे

## पञ्चमलक्षणारम्भः

साध्यवदन्येति । अत्रापि प्रथमलक्षणोक्तरीत्याहेतौ साध्यवदन्यवृत्तित्वाभाव इत्यर्थः ।।

तादृशवृत्तित्वाभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः। तेन धूमवान्वह्नेरित्यादौ धूमवदन्यजलहृदादिवृत्तित्वाभावस्य धूमवदन्यवृत्तित्वजलत्वोभयाभावस्य हेतौसत्त्वेपि नातियाप्तिः ।।

(एतत्कल्पद्वयनिर्दिष्टो विषयः प्रथमलक्षणोक्तदिशां ग्राह्यः।।)

साध्यवदन्यत्वञ्च अन्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वम्, तेन वह्निमान्धूमादित्यादौ तत्तद्वह्निमदन्यस्मिन् धूमादेर्वृत्तावपि नाव्याप्तिः । नवा वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य स्वावच्छिन्नभिन्नभेदरूपस्याधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः, तस्यास्साध्यवत्त्वावच्छिन्नप्रतियोगिताया अत्यन्ताभावत्वनिरूपितत्वेन अन्योन्याभाववत्वनिरूपितत्वविरहात् । अन्योन्याभावत्वनिरूपितत्वञ्च तादात्म्यसम्बन्धावच्छिन्नत्वमेव ।।

साध्यनिष्ठावच्छेदकतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशनस्य प्रयोजनमाह– तत्तद्वह्निमदिति। तत्प्रतियोगितायामन्योन्याभावत्वनिरूपितत्वनिवेशनस्य प्रयोजनमाह– स्वावच्छिन्नभिन्नेति । अत्र स्वपदं वह्निमदस्यन्ताभावपरम्। अत्र साध्यवन्निष्ठप्रतियोगिताकभेदपदेन वह्निमान्नास्तीति प्रतीतिसिद्धात्यन्ताभावो गृह्यते, तथाहि– निरुक्तात्यन्ताभावसाध्यवन्निष्ठप्रतियोगिताकत्वं निर्विवादम्, वह्निमदत्यन्ताभावस्य वह्निमदभाववद्भिन्नभेदस्य च समनैयत्येनैक्याङ्गीकारेण तदभावे भेदत्वञ्चसिद्ध्यति। तन्निवेशे तु तादृशात्यन्ताभावीयप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वरूपान्योन्याभावत्वनिरूपितत्वविरहान्नोक्तरीत्या दोषः।।

साध्यत्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, तेनवह्निमान्धूमादित्यादौ वह्निमत्त्वावच्छिन्नप्रतियोगिताकस्य समवायेन वह्निमतोऽन्योन्याभावस्याधिकरणपर्वतादौ धूमादेर्वृत्तावपि नाव्याप्तिः।।

अत्र वह्निमान्धूमादित्यत्र महानसानुयोगिकसंयोगेन वह्निमान्नेतिप्रतीतिसिद्ध-भेदं महानसीयवह्निमान्नेतिप्रतीतिसिद्धभेदञ्चादायाव्याप्तिवारणाय साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिगर्भनिवेशः साध्यतावच्छेदकतेतरवारक-पर्याप्तिगर्भनिवेशश्च कार्यः संयोग समवायान्यतरसम्बन्धेन वह्निमान्धूमादित्यत्र सम-वायेन वह्निमद्भेदमादाय वह्निधूमान्यतरवान् वह्नेरित्यत्र धूमवद्भेदमादायचाव्याप्ति-वारणाय साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिगर्भनिवेशः साध्यता-वच्छेदकतान्यूनवारकपर्याप्तिगर्भनिवेशश्च कार्यः।।

**सर्वमन्यत् प्रथमलक्षणोक्तदिशाऽवसेयम्। यथाच न तृतीयलक्षणाभेद-स्तथा तत्रैवोक्तम्। इति समासः।।**

इति पञ्चमलक्षणं समाप्तम्॥

साध्यवद्भिन्नवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशादिकं प्रथम-लक्षणवत् ग्राह्यम्॥

इति श्रीमत्कुरुगंटुपाख्य श्रीरामशास्त्रि विरचिते
पञ्चलक्षणीसर्वस्वे पञ्चमलक्षणं समाप्तम्॥

श्रीमते नारायणाय नमः

# पञ्चलक्षणीसर्वस्वे

## पञ्चलक्षणीदूषणारम्भः

सर्वाण्येव लक्षणानि केवलान्वयिन्यव्याप्त्यादूषयति । केवलान्वयिन्यभावादिति । पञ्चानामेव लक्षणानाम् इदं वाच्यम् ज्ञेयत्वादित्यादिव्याप्यवृत्तिकेवलान्वयि साध्यके द्वितीयादिलक्षणचतुष्टयस्य तु कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिकेवलान्वयि साध्यकेपि च अभावादित्यर्थः। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्यचाप्रसिद्धत्वात् । कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वस्याप्रसिद्धत्वाच्चेति भावः। तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वञ्च तद्व्याख्यानावसर एव प्रपञ्चितम् ।।

पञ्चानामपि लक्षणानां इदं वाच्यं ज्ञेयत्वादित्यादि केवलान्वयिसाध्यकस्थलेऽव्याप्तिप्रकारः मन्दाधिकारिणां बोधसौकर्याय निरूप्यते, तथाहि– प्रथमचतुर्थलक्षणयोः विशिष्टसाध्याभावासिद्धिः, द्वितीयपञ्चमयोः विशिष्टसाध्यवद्भेदाप्रसिद्धिः तृतीये साध्यवन्निष्ठप्रतियोगिताकभेदस्य लक्षणघटकत्वेपि तादृशस्य घटादिभेदस्य प्रसिद्धत्वेपि तादृशभेदाधिकरणे पटादौ हेतोर्वृत्त्याऽव्याप्तिः । कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिसाध्यकस्थले प्रथमचतुर्थयोः निरवच्छिन्नसाध्याभावाधिकरणत्वाप्रसिद्ध्या द्वितीयपञ्चमयोः तादृशसाध्यवद्भेदाप्रसिद्ध्याचाव्याप्तिः, तृतीयलक्षणे तु पूर्वोक्तरीत्याऽव्याप्तिः। प्रथमलक्षणस्यान्तेऽन्येवित्यादिना परिष्कृतत्वेन तस्य कपिसंयोगाभाववान् सत्त्वादित्यत्र दोषाप्रसक्त्या द्वितीयादि लक्षणचतुष्टयेत्युक्तम् ।।

एतच्चोपलक्षणम्, द्वितीये कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिः, अधिकरणभेदेनाभावभेदे मानाभावात् कपिसंयोगवद्भिन्नवृत्तिकपिसंयोगाभावो द्रव्यवृत्तिकपिसंयोगाभाव एव, तद्वृत्तित्वादेतद्वृक्षत्वस्य । नच साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वं वक्तव्यम् । एवञ्च वृक्षस्य विशिष्टाधिकरण-

साध्याभावपदवैयर्थ्यापतेः, साध्यवद्भिन्नत्वाभावान्नाव्याप्तिरिति वाच्यम्, सद्धेतौ हेत्वधिकरणेविशिष्टावृत्तित्वाविशिष्टवदवृत्तित्वस्यैव सम्यक्तत्वात्, धिकरणत्वाभावादेवासम्भवाभावात् ।।

।। इति पञ्चलक्षणी ।।

श्रीमत्कुरुगंटुपाख्य श्रीरामशास्त्रि विरचिते

पञ्चलक्षणीसर्वस्वे पञ्चलक्षणीदूषणं समाप्तम् ।।

श्रीमेधादक्षिणामूर्तये नमः

# पञ्चलक्षणीसर्वस्वे

## सिंहलक्षणप्रारम्भः

चिन्तामणिः। नापि साध्यासामानाधिकरण्यानधिकरणत्वम्, साध्यवैयधिकरण्यानधिकरणत्वम्, तदुभयमपिसाध्यानधिकरणानधिकरणत्वम्, तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमेचाप्रसिद्धम् ॥

नापीति । अत्र साध्यासामानाधिकरण्यं न साध्याधिकरणवृत्तित्वाभावः, द्रव्यं सत्त्वादित्यत्रातिव्याप्तेः द्रव्यत्वाधिकरण वृत्तित्वाभावानधिकरणत्वात्सत्तायाम् । नापी साध्यवद्भिन्नवृत्तित्वम्, द्वितीयेन पुनरुक्त्यापत्तेः । किन्तु साध्याधिकरणत्वाभाववद्वृत्तित्वम्, तदनधिकरणत्वञ्च तद्भिन्नत्वम्, अधिकरणत्वप्रवेशे प्रयोजनविरहात्, तथाच साध्याधिकरणत्वाभाववद्वृत्तिभिन्नत्वं हेतोरव्यभिचरितत्वमिति फलितम् । अव्याप्यवृत्तिसाध्यकाव्याप्तिवारणायाधिकरणत्वप्रवेशः, अव्याप्यवृत्तेरधिकरणता तु नाव्याप्यवृत्तिः ।।

साध्यस्यासामानाधिकरण्यमिति । समानं अधिकरणं ययोस्तौ समानाधिकरणौ, तयोर्भावस्सामानाधिकरण्यम्, साध्यस्य सामानाधिकरण्यं साध्यसामानाधिकरण्यम्, नञः मध्येप्रवेशोपि साध्यसामानाधिकरणस्याभावस्साध्यासामानाधिकरण्यम्, व्युत्पत्तिसिद्ध एव, तस्याधिकरणं साध्यासामानाधिकरण्याधिकरणं, तस्य भावः साध्यासामानाधिकरण्यानधिकरणत्वं, साध्यतादृशाधिकरणत्वं, तस्याभावः साध्याधिकरणनिरूपितवृत्तित्वाभाव इति लभ्यते । द्वितीयेनेति । स्याधिकरणेऽन्वये व्याघ्रलक्षणेनेत्यर्थः। अन्यत्सुगम् ॥

साध्याधिकरणत्वञ्च साध्यतावच्छेदकधर्मावच्छिन्नं साध्यतावच्छेदकसम्बन्धावच्छिन्नं च ग्राह्यम्, अन्यथा गुणधर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ सत्ताया एव साध्यत्वेन साध्याधिकरणत्वाभाववत् सामान्याद्येव, तदवृत्तित्वाज्जातेरतिव्याप्तिः स्यात् । स्याञ्च समवायेन वह्न्यादौ साध्येसंयोगेन धूमादिहेतावतिव्याप्तिः, वह्न्यधिकरणत्वाभाव ज्जलह्रदाद्येव, तदवृत्तित्वाद्धूमादेः। इत्यञ्च साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्नसाध्याधिकरणत्वाभाववद्गुणादि तद्वृत्तित्वाज्जातेः, साध्यता-

वच्छेदकसमवायसम्बन्धावच्छिन्नवह्न्यधिकरणत्वाभाववत् पर्वताद्यपि, धूमस्य
तद्वृत्तित्वान्नातिव्याप्तिः ॥

साध्यनिष्ठाधेयतायां साध्यतावच्छेदकतापर्याप्त्यधिकरणंधर्मावच्छिन्नत्वनिवे-
शस्यावश्यकतां दर्शयति । गुणकर्मान्यत्वेति । साध्यतावच्छेदकतेतरवारकपर्या-
प्त्यनिवेशे द्रव्यं सत्वादित्यत्र द्रव्यत्वसत्वान्यतरत्वावच्छिन्नाधेयतामादायातिव्या-
प्तिर्बोध्या । जन्यानां कालोपाधित्वानङ्गीकाराभिप्रायेणाह– जलह्रदादीति । अन्यथा
जलादेरपि कालिकेनसाध्याधिकरणत्वेन तथा कथनस्यानुचितत्वप्रसङ्गात् । अत्र
साध्यतानिरूपितसंसर्गतावच्छेदकता न्यूनवारकपर्याप्त्यनिवेशे महानसानुयोगिक-
संयोगसम्बन्धेन वह्निमान् धूमादित्यत्र संयोगेन वह्न्याधिकरणत्वाभाववति जल-
ह्रदादौ धूमस्यावृत्त्याऽतिव्याप्तिः। साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्या-
प्त्यनिवेशे समवायेन वह्निमान्धूमादित्यत्र संयोगसमवायान्यतरसम्बन्धेन वह्न्यधिक-
रणत्वाभाववति जलादौ धूमस्यावृत्त्याऽतिव्याप्तिः बोध्या ॥

वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीयातेन तादृशवह्न्यधिकरण-
त्वाभाववति धूमावयवे समवायेन धूमस्य वृत्तावपि न क्षतिः। नचैवं सत्तावान्
द्रव्यत्वादित्यादावव्याप्तिः, सत्ताधिकरणत्वाभाववति सामान्यादौ हेतुतावच्छेद-
कसमवायसम्बन्धेन वृत्तेरेवाप्रसिद्धेरिति वाच्यम्, तादृशसाध्याधिकरणत्वा-
भावव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति विवक्षितत्वात् । साध्या-
धिकरणत्वाभावसामानाधिकरण्येत्युक्तौ धूमवान् वह्नेरित्यादौ धूमाधिकरण-
त्वाभाववति जलह्रदादौ वह्निमदन्योन्याभावसत्त्वादतिव्याप्तिः अतो व्यापक-
त्वानुधावनम् । अन्योन्याभावप्रतियोगितावच्छेदकत्वं हेतुतावच्छेदकसम्बन्धा-
वच्छिन्नं हेतुतावच्छेदकावच्छिन्नञ्च ग्राह्यम्, अन्यथा वह्निमान्धूमादित्यादौ वह्न्यधि-
करणत्वाभाववति धूमावयवे धूमवदन्योन्याभावसत्त्वादतिव्याप्तिरस्यात् । स्याच्च
द्रव्यं जातिरित्यादौ घटत्वादितत्तज्जातिमतोऽन्योन्याभावस्य द्रव्यत्वाधिकरणत्वा-
भावव्यापकत्वेनातिव्याप्तिः। अव्याप्यवृत्तिमतोऽन्यान्याभावस्तु नाव्याप्यवृत्ति-
रिति पृथिवी संयोगादित्याद्यव्याप्यवृत्तिहेतुके व्यभिचारिणि नातिव्याप्तिरिति
संक्षेपः ।।

इति सिंहलक्षणं समाप्तम् ॥

अत्र आधेयतायां हेतुतानिरूपितसंसर्गतावच्छेदकतरवारकपर्याप्त्यनिवेशे वह्नि-
मान्धूमादित्यत्रैव तादृशधूमावयवनिरूपितसंयोगसमवायान्तरसम्बन्धावच्छिन्न वृत्ति-

तामादायाऽव्याप्तिः । तादृशसंसर्गतावच्छेदकतान्यूनवारकपर्याप्त्यनिवेशेमहानसी-
यवह्निमान् महानसानुयोगिकसंयोगसम्बन्धेन धूमादित्यत्र साध्याधिकरणत्वाभाव-
वत्पर्वतादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तितामादायाऽव्याप्तिः । विशिष्टत्वा-
दिति । सत्तावान् जातेरित्यत्र साध्याधिकरणत्वाभाववति सामान्यादावपि जाति-
मद्भेदस्याक्षततया तदीयप्रतियोगितावच्छेदकत्वस्य जातित्वावच्छिन्ने सत्त्वेन साध्या-
धिकरणत्वाभावव्यापकान्यान्याभावप्रतियोगितावच्छेदकत्वस्याक्षततया समन्वयः ।
वह्निमान् धूमादित्यत्रावेति । समवायेन धूमहेतुकस्थल इत्यर्थः धूमवदन्योन्या-
भावेति । संयोगेन धूमवान्नेतिभेदसत्त्वादित्यर्थः॥

अत्रान्योन्याभावप्रतियोगितावच्छेदकतायां हेतुतानिरूपितसंसर्गतावच्छेदक-
तान्यूनेतरवारकपर्याप्तिद्वयंनिवेशनीयम्, अन्यथा संयोगेन वह्निमान् संयोगसम-
वायान्यतरसम्बन्धेन धूमादित्यत्र साध्याधिकरणत्वाभाववति धूमावयवेऽपि विद्यमान-
स्यसंयोगेन धूमवान्नेत्यन्योन्याभावस्य प्रतियोगितावच्छेदकत्वस्य धूमे सत्त्वादति-
व्याप्तिः, महानसीयवह्निमान्धूमादित्यत्र साध्याधिकरणत्वाभाववति पर्वतादावपि
महानसानुयोगिकसंयोगादिसम्बन्धेन धूमवान्नेतिभेदस्य सत्त्वेन तत्प्रतियोगितव-
च्छेदकत्वस्य धूमे सत्वेनचातिव्याप्तिः ॥

तत्र हेतुतावच्छेदकधर्मावच्छिन्नत्वं सार्थकमिति । द्रव्यं जातेरिति साध्याधि-
करणत्वाभाववति गुणादौ (यावति) घटत्वपटत्वादिजातिमद्भेदसत्त्वेन तत्प्रतियोगि-
तावच्छेदकतामादायातिव्याप्तिसङ्गतिरिति भावः। (ननु हेतुतावच्छेदकावच्छेदेनव्या-
प्तेर्विवक्षितत्वेन गुणत्वकर्मत्वजात्योः तादृशावच्छेदकत्वविरहेणैवातिव्याप्तिवार
णादत्रातिव्याप्तिकथनमसङ्गतमितिचेन्न, अत्रावच्छेदकावच्छेदेन व्याप्तेरविवक्षणात्)
हेतुतावच्छेदकावच्छिन्नत्वस्य तादृशावच्छेदकतायां निवेशेतु निरुक्तघटत्वादिनिष्ठा-
वच्छेदकताया हेतुतावच्छेदकजातित्वानवच्छिन्नत्वेन जातिमद्भावस्यतत्रासत्त्वेन च
नातिव्याप्तिः । अत्रापि हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वं तादृशा-
वच्छेदकतायां निवेशनीयम्, अन्यथा द्रव्यं सत्वघटत्वान्यतरस्मादित्यत्र साध्याधि-
करणत्वाभाववति गुणादावपि वर्तमानं घटत्ववद्भेदमादायातिव्याप्तिः । इत्थं चाधिक-
पर्याप्त्यनिवेशे पूर्वोक्तस्थलएव घटत्वादिजातिमान्नेति भेदमादायातिव्याप्तिः ॥

इति श्रीमत्कुरुगंटुपाख्यश्रीरामशास्त्रिविरचिते
पञ्चलक्षणीसर्वस्वे सिंहलक्षणं समाप्तम् ॥

श्रीगणेशाय नमः

# पञ्चलक्षणीसर्वस्वे

## व्याघ्रलक्षणप्रारम्भः

साध्यवैयधिकरण्यमिति। साध्यवैयधिकरण्यं साध्यवद्भिन्नवृत्तित्वम्। साध्यवदवृत्तित्वपरत्वे त्वेवं सत्त्वादित्यादावतिव्याप्तिः। अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाव्याप्यवृत्तिरित्यव्याप्यवृत्तिसाध्यकसद्धेतौ नाव्याप्तिः। अनधिकरणत्वान्तर्गताधिकरणत्वांशस्याप्रवेशात् न साध्यवदन्यावृत्तित्वमित्यनेन यथाश्रुतस्य पौनरुक्त्यम्। अखण्डाभावघटकतया च नाधिकरणत्वांशस्य वैयर्थ्यम्॥

विरुद्धमधिकरणं यस्य स व्यधिकरणः, साध्यस्य व्यधिकरणः साध्यव्यधिकरणः, तस्य भावस्साध्यवैयधिकरण्यम्, तस्याधिकरणं साध्यवैयधिकरण्याधिकरणम्, तस्य भावः तादृशाधिकरणत्वम्, तस्याभावस्साध्यवैयधिकरण्यानधिकरणत्वम्, इत्थञ्च साध्याधिकरणनिरूपितवृत्तित्वाभावानधिकरणत्वमिति लभ्यते। एवं सत्त्वादिति। साध्याधिकरणनिरूपितवृत्तितायास्सत्ताहेतौ सत्त्वेन तादृशलक्षणस्य तत्राव्याहततया तत्रातिव्याप्तिरिति भावः। साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य लक्षणत्वे तु सत्तायां साध्यवद्भिन्नगुणादिनिरूपितवृत्तित्वाधिकरणताया एव हेतौ सत्त्वान्नातिव्याप्तिः। न पौनरुक्त्यमिति। साध्यवद्भिन्नवृत्तित्वाधिकरणत्वाभावरूपप्रकृतलक्षणे तादृशवृत्तित्वतदधिकरणतात्वादीनां प्रतियोगितावच्छेदककोटौ प्रवेशः, साध्यवद्भिन्नवृत्तित्वाभावरूपपञ्चमलक्षणे तु न तथेति भेदः। ननु प्रकृतलक्षणे प्रविष्टस्य तादृशवृत्तित्वाधिकरणत्वस्य वैयर्थ्यमित्यत आह न वैयर्थ्यमिति। प्रकृतलक्षणे पञ्चमलक्षणस्याप्रविष्टत्वेन स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितत्वरूपव्यर्थविशेषणघटितत्वं न सम्भवतीति भावः॥

साध्यवद्भिन्नत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकं ग्राह्यम्, तेन वह्निमान् धूमादित्यादौ धूमस्य समवायेन [illegible] साध्यवद्भिन्ने च पर्वतादौ वृत्तित्वेऽपि न क्षतिः। तादृशसाध्यवद्भिन्नत्वं व्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति समुदायार्थो नेष्टः, अन्यथा पूर्ववत्साध्यवद्भिन्नवृत्तित्वमित्यत्र वृत्तेर्हेतुतावच्छेदकसम्बन्धेने [illegible]

यौगिकभेदौ च केवलान्वयिन्यपि प्रसिद्धावित्यत आह— यत्किञ्चिदिति । शेषं पूर्ववदित्याहुः ॥

इति शशधरमणिधरलक्षण व्याख्यानं समाप्तम् ।

अन्यतरबोधजनकमिति । साध्यस्याधिकरणं साध्याधिकरणम्, साध्याधिकरणं न भवतीति साध्यानधिकरणम् इति व्युत्पत्त्या साध्याधिकरणभिन्नमित्यर्थो लभ्यते । विवक्षया साध्याधिकरणत्वाभाववानित्यर्थलाभः, साध्यानधिकरणं अधिकरणं यस्य स इति विग्रहवाक्येन यन्निरूपिताधिकरणतावत्साध्याधिकरणमिति बोधे जाते समासवाक्यात् साध्याधिकरणनिरूपितवृत्तितावानिति समासवाक्यजनितो बोधः, तस्य भावः साध्यानधिकरणाधिकरणत्वम्, तस्याभावस्साध्यानधिकरणानधिकरण-त्वमिति क्रमेण निरुक्तान्यतरविषयकबोधजनकत्वं साध्यानधिकरणानधिकरण-पदस्य सम्भवतीति बोध्यम् ॥

इति श्रीमत्कुरुगंट्युपनामकश्रीरामशास्त्रि विरचिते

पञ्चलक्षणीसर्वस्वे व्याप्तिलक्षणं समाप्तम् ॥

श्रीरस्तु

श्री गणेशाय नमः।

# पञ्चलक्षणीसर्वस्वे

## सार्वभौमलक्षणारम्भः

**हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वस्याभावः तदनधिकरणत्वं व्याप्तिरिति सौधितिः ।।**

हेत्वधिकरण इत्यत्र सप्तम्यर्थोऽवच्छिन्नत्वम्, तस्याभावेऽन्वयः, उभयत्र
तृतीयाया अवच्छिन्नत्वमर्थः, तस्य हेतुनिष्ठाधेयतायां साध्यवद्वृत्तितायाञ्चान्वयः।
पर्वते धूमे वह्निसामानाधिकरण्यमिति प्रतीत्या हेत्वधिकरणावच्छिन्नत्वस्यैव साध्य-
सामानाधिकरण्ये सत्त्वेन हेत्वधिकरणावच्छिन्नतादृशाभावानधिकरणत्वस्याक्षततया-
द्वह्निमान्धूमादित्यत्र समन्वयः। अयोगोलके वह्नौ न धूमसामानाधिकरण्यमिति
प्रतीत्या वह्नौ हेत्वधिकरणावच्छिन्नतादृशाभावस्य सत्त्वान्नातिव्याप्तिः। हेत्वधिकरणा-
वच्छिन्नत्वनिवेशाभावे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। तन्निवेशे तु सामानाधिकरण्य-
स्याव्याप्यवृत्तितया सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीत्या हेत्वधि-
करणगुणावच्छिन्नस्य तादृशाभावस्यैव हेतौ सत्त्वान्नातिव्याप्तिः। हेतुनिष्ठाधेयतायां
हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे धूमे धूमावयवे न वह्निसामानाधिकरण्य-
मिति प्रतीत्या समवायेन हेत्वधिकरणधूमावयवावच्छिन्नस्य तादृशाभावस्यैव धूमे
सत्त्वाद्वह्निमान्धूमादित्यादावव्याप्तिः साध्यवद्वृत्तितायां हेतुतावच्छेदकसम्बन्धा-
वच्छिन्नत्वानिवेशे धूमे पर्वतीयवह्न्यधिकरणनिरूपितसमवायसम्बन्धावच्छिन्न
वृत्तित्वमिति प्रतीत्या पर्वतावच्छिन्नतादृशाभावस्य हेतौ सत्त्वाद्वह्निमान्धूमादि-
त्यत्राव्याप्तिः। तदनधिकरणत्वं तदधिकरणभिन्नत्वं वक्तव्यम्, नतु तदधिकरण-
त्वाभावः, अन्यथा अव्याप्यवृत्त्यधिकरणताया अव्याप्यवृत्तितया सत्तायां गुणाव-
च्छेदेन द्रव्यत्वसामानाधिकरण्याभावस्य सत्त्वेऽपि द्रव्यावच्छेदेन तत्सामानाधि-
करण्याभावाभावस्य सत्त्वाद्द्रव्यं सत्त्वादित्यादावतिव्याप्तिः, तन्निवेशे तु भेदस्य
व्याप्यवृत्तितया तदवच्छेदकस्याप्रसिद्ध्या नातिव्याप्तिः।

कालो घटादिति महाकालानुयोगिककालिकसम्बन्धेन घटादिहेतुकस्थले

हेत्वधिकरणमहाकालावच्छेदेन साध्यसामानाधिकरण्याभावस्य हेतावप्रसिद्धतयाऽव्याप्तिप्रसङ्गेन इदं सार्वभौमलक्षणं दुष्टमित्यवधेयम् ॥

इति श्रीमत्कुरुगंटुपाख्य श्रीरामशास्त्रि विरचिते
पञ्चलक्षणीसर्वस्वे सार्वभौमलक्षणं समाप्तम् ॥

# पञ्चलक्षणीसर्वस्वे

## चतुर्दशलक्षणनिरूपणम्

॥ लक्षणम् ॥

१. यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक-प्रतियोगिताका यावन्तोऽभावाः स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगि-समानाधिकरणाः तत्त्वम् व्याप्तिः ॥

॥ समन्वयस्तु ॥

पूर्वपक्षीयव्याप्तिनिरूपणप्रसङ्गप्रसक्तानां दीधितिकृता निरूपितानां चतुर्दशानां व्याप्तीनां स्वरूपं समन्वयश्च व्युत्पत्त्युपयोगाय प्रदर्श्यते। एषां लक्षणानां वाच्यं ज्ञेयत्वादित्यादिव्याप्यवृत्तिकेवलान्वयिसाध्यकस्थलेष्वपि सौन्दलमताभिमतान् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानादाय समन्वयः कार्यः। सौन्दलमते व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिस्थले तृतीयान्तेनोल्लिख्यमानधर्मस्यैव प्रतियोगितावच्छेदकत्वं, नतु प्रतियोग्यंशे भासमानधर्मस्य तदङ्गीक्रियते, तथाच घटत्वेन पटो नास्तीत्यादौ घटत्वादेरेव प्रतियोगितावच्छेदकत्वं सम्भवति, नतु पटत्वस्य तत्। प्रतियोगितायां व्यधिकरणधर्मावच्छिन्नत्वञ्च स्वावच्छिन्नत्व स्वसामानाधिकरण्योभयसम्बन्धेन धर्मविशिष्टान्यत्वम्। घटत्वादिना पटादीनां कुत्राप्यविद्यमानतयाऽयमभावः केवलान्वयी भवति। तथाच वह्निमान्धूमादित्यादौ वह्निद्रव्यसामान्याभाव घटत्वाद्यवच्छिन्नवह्निनिष्ठप्रतियोगिताकाभावादीनां लक्षणघटकतया वाच्यं ज्ञेयत्वादित्यादौ घटत्वाद्यवच्छिन्नवाच्यत्वादिनिष्ठप्रतियोगिताकाभावप्रभृतिव्यधिकरणधर्मावच्छिन्नाभावादीनां लक्षणघटकतया समन्वयो भवति। धूमवान् वह्नेरित्यादिव्यभिचारिहेतुकस्थले धूमसामान्याभावात्मकसाध्यसामान्याभावायोगोलकभेदाभावात्मकव्यभिचारनिरूपकान्तत्वभावादीनां लक्षणघटकतया नातिव्याप्तिः (इदं प्रथमस्वलक्षणमुच्यते ॥)

२. यत्समानाधिकरणास्साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणाः तत्त्वम् व्याप्तिः ॥

वह्निमान्धूमादित्यादौ वह्नि (द्रव्य) सामान्याभाव वह्नित्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगिताकभावादीनादाय वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वाद्यवच्छिन्नज्ञेयत्वादिनिष्ठप्रतियोगिताकभावादीनादाय च समन्वयः कार्यः। व्यभिचारिस्थले साध्यसामान्याभावव्यभिचारनिरूपकान्यतराभावादीनादाय च नातिव्याप्तिः (इदं द्वितीयस्वलक्षणमित्युच्यते)॥

### अथ चक्रवर्तिलक्षणत्रयम्

**३. व्याप्यवृत्तिर्हेतुसमानाधिकरणो यस्साध्याभावः (साध्यनिष्ठप्रतियोगिताकाभावः) तत्प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः॥**

वह्निमान्धूमादित्यादौ घटत्वाद्यवच्छिन्नवह्निनिष्ठप्रतियोगिताकाभावमादाय वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वत्वाद्यवच्छिन्नवाच्यनिष्ठप्रतियोगिताकाभावमादाय च समन्वयः कार्यः। व्यभिचारिस्थले साध्यसामान्याभावमादायैव नातिव्याप्तिः (इदं प्रथमचक्रवर्तिलक्षणमित्युच्यते॥

**४. हेतुसमानाधिकरणो व्याप्यवृत्तिर्योऽभावः तत्प्रतियोगितासमानाधिकरणं तत्प्रतियोगितावच्छेदकञ्च यद्यत् तद्भिन्नं (स्वसामानाधिकरण्य स्वावच्छेदकत्वोभयसम्बन्धेन तादृशप्रतियोगिताविशिष्टान्यत्) यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः॥**

अत्र व्यधिकरणधर्मावच्छिन्नाभावो न ग्रहीतुं शक्यते, तदीयप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकस्याप्रसिद्धत्वात्, किन्तु घटादिसामान्याभावमादाय सद्धेतुस्थले समन्वयः। व्यभिचारिणि साध्यसामान्याभावमादाय नातिव्याप्तिः (इदं द्वितीयचक्रवर्तिलक्षणमुच्यते॥

**५. हेतुसमानाधिकरणः प्रतियोगिव्यधिकरणो योऽभावः तत्प्रतियोगितासमानाधिकरणं तत्प्रतियोगितावच्छेदकं यद्यत् तद्भिन्नं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः।**

सद्धेतुस्थले घटादिसामान्याभावमादाय समन्वयः। साध्यसामान्याभावमादाय व्यभिचारिणि नातिव्याप्तिः (इदं तृतीयचक्रवर्तिलक्षणमित्युच्यते॥

### अथ प्रगल्भलक्षणत्रयम्

**६. यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेद-**

**कावच्छिन्नसाध्यसामानाधिकरण्यं तद्धर्मवत्त्वम् व्याप्तिः।।**

(यद्धर्मतद्धर्मपदे हेतुतावच्छेदकधर्मपरे) वह्निमान्धूमादित्यादौ वह्नित्वादिना घटाभावादिकं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वादिना ज्ञेयत्वाभावादिकमादाय समन्वयः कार्यः। व्यभिचारिणि साध्यसामान्याभावं व्यभिचारनिरूपकान्यत्वाभावञ्चादायातिव्याप्तेर्वारणम् (इदं प्रथमप्रगल्भलक्षणम्)॥

**७. यत्समानाधिकरणसाध्याभावप्रमासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं व्याप्तिः।।**

पूर्वलक्षणनिर्दिष्टभावानादायैव समन्वयोऽतिव्याप्तिवारणञ्च ग्राह्यम् (इदं द्वितीयं प्रगल्भलक्षणम्।।

**८. यन्निष्ठसाध्याभाववद्वृत्तित्वविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभाववत् तत्त्वं व्याप्तिः।।**

पूर्वलक्षणनिर्दिष्टाभावा एव लक्षणघटकाः, अतस्समन्वयोऽतिव्याप्तिवारणञ्च। प्रगल्भलक्षत्रयेपि साध्याभावः साध्यतावच्छेकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः। इदं तृतीयप्रगल्भलक्षणमित्युच्यते।।

## अथ मिश्रलक्षणत्रयम्

**९. यावन्तस्यसाध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावाः तद्वत्त्वं व्याप्तिः।।**

वाच्यत्वत्वाद्यवच्छिन्नज्ञेयत्वादिनिष्ठप्रतियोगिताकाभावान् तत्सजातीयान् तादृशाभावाधिकरणवृत्तित्वं घटत्वान नास्तीत्याकारकप्रतीतिसिद्धांश्चभावानादाय ज्ञेयत्वादित्यादौ समन्वयः। वह्निमान्धूमादित्यादौ वह्निसामान्याभावः तदधिकरणवृत्तित्वसामान्याभावश्च तत्सजातीयो घटक इति समन्वयः। व्यभिचारिणि साध्यसामान्याभावव्यभिचारनिरूपकान्यत्वाभावादिसाध्याभावाधिकरणवृत्तित्व सामान्याभावेपि घटक इति नातिव्याप्तिः। इदं प्रथमं मिश्रलक्षणमुच्यते।

**१०. यावन्तस्तादृशास्साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकं यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपावच्छिन्नत्वं व्याप्तिः।।**

वह्निमान्धूमादित्यादौ वह्निसामान्याभाववह्नित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रभृतिसाध्याभावान् तत्सजातीयांस्तानेवाभावानादाय समन्वयः कार्यः।

वह्निमान्धूमादित्यादौ वह्नि (द्रव्य) सामान्याभाव वह्नित्वाद्यवच्छिन्नघटादि-निष्ठप्रतियोगिताकभावादीनादायवाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वाद्यवच्छिन्नज्ञेय-त्वादिनिष्ठप्रतियोगिताकाभावादीनादाय च समन्वयः कार्यः। व्यभिचारिस्थले साध्य सामान्याभावव्यभिचारनिरूपकान्यतमाभावादीनादाय च नातिव्याप्तिः (इदं द्वितीय-स्वलक्षणमित्युच्यते)॥

अथ चक्रवर्तिलक्षणत्रयम्

३. व्याप्यवृत्तिर्हेतुसमानाधिकरणो यस्साध्याभावः (साध्यनिष्ठप्रतियोगि-ताकाभावः) तत्प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसा-मानाधिकरण्यं व्याप्तिः॥

वह्निमान्धूमादित्यादौ घटत्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगिताकाभावानादाय वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वाद्यवच्छिन्नाप्रसिद्धत्वेन प्रतियोगिताकाभावानादाय च समन्वयः कार्यः। व्यभिचारिस्थले साध्यसामान्याभावमादायैव नातिव्याप्तिः (इदं प्रथमचक्रवर्तिलक्षणमित्युच्यते॥

४. हेतुसमानाधिकरणो व्याप्यवृत्तियोऽभावः तत्प्रतियोगितासमानाधि-करणं तत्प्रतियोगितावच्छेदकञ्च यद्यत् तद्भिन्नं (स्वसामानाधिकरण्य स्वावच्छेदक-त्वोभयसम्बन्धेन तादृशप्रतियोगिताविशिष्टान्यत्) यत्साध्यतावच्छेदकं तदव-च्छिन्नसामानाधिकरण्यं व्याप्तिः॥

अत्र व्यधिकरणधर्मावच्छिन्नाभावो न ग्रहीतुं शक्यते, तदीयप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकस्याप्रसिद्धत्वात्, किन्तु घटादिसामान्याभावमादाय सद्धेतुस्थले समन्वयः। व्यभिचारिणि साध्यसामान्याभावमादाय नातिव्याप्तिः (इदं द्वितीयचक्रवर्तिलक्षणमुच्यते॥

५. हेतुसमानाधिकरणः प्रतियोगिव्यधिकरणो योऽभावः तत्प्रतियोगिता-समानाधिकरणं तत्प्रतियोगितावच्छेदकं यद्यत् तद्भिन्नं यत्साध्यतावच्छेदकं तदव-च्छिन्नसामानाधिकरण्यं व्याप्तिः।

सद्धेतुस्थले घटादेःसामान्याभावमादाय समन्वयः। साध्यसामान्याभवमादाय व्यभिचारिणि नातिव्याप्तिः (इदं तृतीयचक्रवर्तिलक्षणमित्युच्यते॥

अथ प्रगल्भलक्षणत्रयम्

६. यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेद-

**कावच्छिन्नसाध्यसामानाधिकरण्यं तद्धर्मवत्त्वम् व्याप्तिः ।।**

(यद्धर्गतद्धर्मपदे हेतुतावच्छेदकधर्मपरे) वह्निमान्धूमादित्यादौ वह्नित्वादिना घटाभावादिकं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वादिना ज्ञेयत्वाभावादिकमादाय समन्वयः कार्यः। व्यभिचारिणी साध्यसामान्याभावं व्यभिचारनिरूपकान्यत्वाभावञ्चादायातिव्याप्तेर्वारणम् (इदं प्रथमप्रगल्भलक्षणम्) ॥

**७. यत्समानाधिकरणसाध्याभावप्रमासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं व्याप्तिः ।।**

पूर्वलक्षणनिर्दिष्टभावानादायैव समन्वयोऽतिव्याप्तिवारणञ्च ग्राह्यम् (इदं द्वितीयं प्रगल्भलक्षणम् ॥

**८. यन्निष्ठसाध्याभाववद्वृत्तित्वविशिष्टसामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभाववत् तत्त्वं व्याप्तिः ।।**

पूर्वलक्षणनिर्दिष्टाभावा एव लक्षणघटकाः, अतः समन्वयोऽतिव्याप्तिवारणञ्च । प्रगल्भलक्षत्रयेपि साध्याभावः साध्यतावच्छेकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावो ग्राह्यः । इदं तृतीयप्रगल्भलक्षणमित्युच्यते ॥

**अथ मिश्रलक्षणत्रयम्**

**९. यावन्तस्यसाध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावाः तद्वत्त्वं व्याप्तिः ।।**

वाच्यत्वत्वाद्यवच्छिन्नज्ञेयत्वादिनिष्ठप्रतियोगिताकाभावान् तत्सजातीयान् तादृशाभावाधिकरणवृत्तित्वं घटत्वान नास्तीत्याकारकप्रतीतिसिद्धांश्च भावानादाय वाच्यं ज्ञेयत्वादित्यादौ समन्वयः। वह्निमान्धूमादित्यादौ वह्निसामान्याभावः तदधिकरणवृत्तित्वसामान्याभावश्च तत्सजातीयो घटक इति समन्वयः। व्यभिचारिणि साध्यसामान्याभावव्यभिचारनिरूपकान्यत्वाभावादिसाध्याभावाधिकरणवृत्तित्व सामान्याभावोपि घटक इति नातिव्याप्तिः। इदं प्रथमं मिश्रलक्षणमुच्यते।

**१०. यावन्तस्तादृशास्साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकं यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपावच्छिन्नत्वं व्याप्तिः ।।**

वह्निमान्धूमादित्यादौ वह्निसामान्याभाववह्नित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रभृतिसाध्याभावान् तत्सजातीयास्तानेवाभावानादाय समन्वयः कार्यः।

वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वादिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताका-भावा-श्चादाय समन्वयः कार्यः। व्यभिचारिणि साध्यसामान्याभावव्यभिचारनिरूपकान्य-त्वाभावप्रभृति साध्याभावसजातीयांस्तानेवाभावानादायातिव्याप्तिर्वारणीया। इदं द्वितीयमिश्रलक्षणम् ।।

**११. यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकं यद्रूपा-वच्छिन्नव्यापकतावच्छेदकं तद्रूपावच्छिन्नत्वं व्याप्तिः ।।**

व्यापकत्वसाजात्यव्याप्यवृत्तित्वपरित्यागेन लघुलक्षणमाह-- यावन्त इति । समन्वयः व्यभिचारिणि दोषवारणञ्च पूर्वलक्षणइव ग्राह्यम् । मिश्रलक्षणत्रयेपि साध्याभावः प्रगल्भलक्षणइव ग्राह्यः। अत्र लक्षणत्रये साजात्यञ्च समानाधिकरण-धर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण ग्राह्यम्।। इदं तृतीयं मिश्रलक्षणम् ।।

अथ सार्वभौमलक्षणद्वयम्

**१२. वृत्तिमद्वृत्तयो यावन्तस्तत्साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः।।**

(इदं कूटाघटितलक्षणमुच्यते) वह्निमान्धूमादित्यादौ वह्निसामान्याभाववद्वृत्ति-त्वसामान्याभाव वह्नित्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगिताकाभाववद्वृत्तित्व निष्ठघट-त्वाद्यवच्छिन्नप्रतियोगिताकाभाव प्रभृतीनामभावानां वृत्तिमद्धूमादिवृत्तीनां हेतौ सत्त्वा-त्समन्वयः। वाच्यं ज्ञेयत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्व-निष्ठव्यधिकरण धर्मावच्छिन्नप्रतियोगिताकाभावानां हेतौ सत्त्वात्समन्वयः। व्यभि-चारिणि साध्यसामान्याभाव (व्यभिचारनिरूपकान्यत्वाभाव) वद्वृत्तित्व सामान्या-भावमादाय नातिव्याप्तिः।।

**१३. वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः।।**

इदं कूटघटितलक्षणमुच्यते वह्निमान्धूमादित्यादौ वह्निसामान्याभावघटित-कूटाधिकरणवृत्तित्वसामान्याभाव तादृशवृत्तित्वनिष्ठव्यधिकरणधर्मावच्छिन्नप्रति-योगिताकाभावप्रभृतीनां वृत्तिमद्धूमादिवृत्तीनामभावानां हेतौ सत्त्वात्समन्वयः। वाच्यं ज्ञेयत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावसमुदाया-धिकरणवृत्तित्वनिष्ठव्यधिकरण धर्मावच्छिन्नप्रतियोगिताकाभावप्रभृतीनां हेतौ सत्त्वात्समन्वयः। व्यभिचारिणि साध्यसामान्याभावघटितकूटाधिकरणनिरूपितवृत्ति-

त्वसामान्याभावस्यासत्त्वान्नातिव्याप्तिः। अत्र साध्यभावः साध्यतावच्छेदकसमवायप्रतियोगिताको ग्राह्यः।।

१४. वृत्तिमद्भेदयो यावन्तस्साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तित्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावाः तद्वत्त्वं व्याप्तिः।।

इदं तृतीयं सार्वभौमलक्षणम् सद्धेतुस्थले समन्वयो दोषवारणञ्च कूटघटितलक्षणइव ग्राह्यम् ।।

## अथपूर्वपक्षीयव्याप्तिदूषणम्

इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिन्याद्यानां पञ्चलक्षणानां साध्याभावाद्यप्रसिद्ध्याऽव्याप्तिः। सिंहव्याघ्रलक्षणयोरपि केवलान्वयिनि वह्निमान्धूमादित्यादौ चाव्याप्तिः अनङ्गीकारेणैवाभिहिता। सार्वभौमलक्षणे कालो घटवानित्यत्राव्याप्तिरभिहिता। प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकारेण व्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धतया पूर्वनिर्दिष्टानां चतुर्दशलक्षणानां इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिन्यप्याप्तिः, अतोनिर्दुष्टं सिद्धान्तलक्षणं वक्ष्यते।।

इति श्रीमत्कुरुगंटुपपाख्य श्रीरामशास्त्रि विरचिते
पञ्चलक्षणीसर्वस्वे चतुर्दशलक्षणनिरूपणं
पूर्वपक्षीयव्याप्तिदूषणञ्च समाप्तम् ।।



श्री गणेशाय नमः।

# पञ्चलक्षणीसर्वस्वे

## सिद्धान्तलक्षणारम्भः

हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः॥

तच्च हेत्वधिकरणवृत्त्यत्यन्ताभावाप्रतियोगिसाध्याधिकरणवृत्तित्वम्, वह्निमान्धूमादित्यादौ हेतुव्यापकवह्न्यात्मकसाध्यसामानाधिकरण्यसत्त्वात्समन्वयः। धूमवान् वह्नेरित्यादौ साध्यीभूतधूमेऽयोगोलकान्ताभावेन वह्निव्यापकत्वव्यभिचारान्नातिव्याप्तिः। नच वह्निमान्धूमादित्यादौ विशिष्टाभावोभयाभावादिकमादाय साध्ये हेतुव्यापकत्वव्यभिचारादव्याप्तिरिति वाच्यम्, हेतुसामानाधिकरण्याभावीयप्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वयोः निवेशनीयत्वात्। नच महानसीयवह्निमान् वह्निधूमोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिः तादृशाभावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायाः वैशिष्ट्यव्यासज्यवृत्ति धर्मावच्छिन्नत्वादिति वाच्यम्, तादृशप्रतियोगितानवच्छेदक साध्यतावच्छेदकपर्यन्तनिवेशाभावेन वह्निसामान्याभावमादायैवातिव्याप्तिवारणात्। नच निरुक्तवस्तुसाध्यकवह्निहेतुकस्थलेऽव्याप्तिदुर्वारेति वाच्यम्, साध्यतावच्छेदकाश्रयीभूतमहानसीयवह्न्यादिगततत्त्वावच्छिन्नप्रतियोगिताकं तन्नास्तीत्यभावमादायातिव्याप्तेर्वारणात्। नच वह्निमान्धूमादित्यादौ तन्नास्तीत्यद्यभावमुपादायैव चालिनीन्यायेन वह्निमात्रस्य तादृशाभावप्रतियोगित्वादव्याप्तिरिति वाच्यम्, तादृशप्रतियोगितानवच्छेदक साध्यतावच्छेदकपर्यन्तस्य विवक्षणीयत्वात्। नच तथापि वह्निमान्धूमादित्यादौ विशिष्टाभावोभयाभावादिकमादायाव्याप्तिवारणाय तत्प्रतियोगितायां वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य निवेशनीयतया निरुक्तव्यभिचारिहेतावतिव्याप्तिर्दुर्वारेति वाच्यम्, साध्यतावच्छेदकातिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य तत्र निवेशयत्वात्। अथवा हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत्साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तदवच्छिन्नसामानाधिकरण्यस्य व्याप्तित्वेन पूर्वोक्तरीत्या नाव्याप्तिरतिव्याप्तिर्वा॥

हेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवच्छेदकसम्बन्धावच्छिन्नत्वं विशेषणं देयम्, अन्यथा वह्निमान्धूमादित्यत्र समवायेन वह्न्यभावमादायाव्याप्तिः। हेतुनिष्ठाधेयतायां हेतुतावच्छेदकधर्मसम्बन्धावच्छिन्नत्वे निवेशनीये, अन्यथा वह्निमान्धूमादित्यत्र समवायेन धूमाधिकरणतां द्रव्यत्वावच्छिन्नाधिकरणताञ्चादाय-व्याप्तिः। तत्रैव हेतुतावच्छेदकतान्यूनेतरवारकपर्याप्तिगर्भनिवेशोपि कार्यः, अन्यथा, द्रव्यं विशिष्टसत्त्वादित्यत्र सत्तात्वावच्छिन्नाधेयतामादाय वह्निमान्धूमादित्यादौ धूमजलान्यतरत्वावच्छिन्नाधेयतामादायचाव्याप्तिर्बोध्या। तत्रैव हेतुतानिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारक पर्याप्तिगर्भनिवेशोपि कार्यः, अन्यथा महानसीयवह्निमान् महानसानुयोगिक संयोगेन धूमादित्यत्र केवलसंयोगेन धूमाधिकरणपर्वतादिकमादाय वह्निमान्धूमादित्यादौ संयोगसमवायान्तरसम्बन्धेन धूमाधिकरणपर्वतादिकमादायचाव्याप्तिः॥

हेत्वधिकरणनिरूपितवृत्तितायां स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, अन्यथा वह्निमान्धूमादित्यत्र कालिकसम्बन्धावच्छिन्नवृत्तितामादायाव्याप्तिः, तत्र स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यत्रातिव्याप्तिः। नच रूपत्वव्याप्तिजातिमत्वान् रूपादित्यत्र सर्वस्यापिसाध्यतावच्छेदकस्य चालिनीन्यायेन तादृशाभावप्रतियोगितावच्छेदकत्वादव्याप्तिरिति वाच्यम्, तादृशाभावप्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नावच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात्। नच वह्निमान्धूमादित्यः निरवच्छिन्नसाध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदकस्याप्रसिद्ध्याव्याप्तिरिति वाच्यम्, अवच्छिन्ननिरवच्छिन्नसाध्यतावच्छेदकस्थलभेदेन लक्षणभेदात्। नच द्रव्यं विशिष्टसत्त्वादित्यादौ साध्यतावच्छेदकस्यैवाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्, अवच्छिन्ननिरवच्छिन्नसाध्यकस्थलभेदेनापिलक्षणभेदस्याङ्गीकर्तव्यत्वात्॥

नचैवं कपिसंयोग्येतद्वृक्षत्वादित्यत्राव्याप्यवृत्तिकपिसंयोगाभावमादायाव्याप्तिः हेतुसमानाधिकरणाभावे स्वप्रतियोग्यनधिकरणवृत्तित्वनिवेशेपि तत्रैवाव्याप्तिरिति वाच्यम्, हेतुसमानाधिकरणाभावे स्वप्रतियोग्यधिकरणावृत्तित्वस्य विवक्षितत्वात्। नचैवं कपिसंयोगी सत्त्वादित्यत्र तुल्ययुक्तयाऽतिव्याप्तिरिति वाच्यम्, हेत्वधिकरणे स्वप्रतियोग्यनधिकरणत्वस्य विवक्षितत्वात्। स्वप्रतियोग्यनधिकरणत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्न स्वप्रतियोगितावच्छेदकधर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नत्वरूपं (हेतुसमानाधिकरणाभावीयप्रतियोगितायां अधुना साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशावश्यकता नास्ति) वाच्यम् तेन ज्ञानवान् सत्त्वात्

विशिष्टसत्तावान् जातेरित्यादौ च विषयतासम्बन्धेन ज्ञानाधिकरणतामादाय सत्तात्वावच्छिन्नाधिकरणतामादाय च नातिव्याप्तिः (अत्र प्रतियोग्यनधिकरणत्वञ्च प्रतियोगितावच्छेदकावच्छिन्नसामान्याधिकरणत्वमेव, अभावाधिकरणकाभावस्याधिकरणरूपत्वाभावेन विशिष्टस्य शुद्धातिरेकेण च न वह्निमान्धूमादित्यादौ अन्यत्र वा क्वचमप्यव्याप्तिः)।

ननु कालौ घटवान् कालपरिमाणादित्यत्राव्याप्तिः, हेत्वधिकरणमहाकालस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नस्य घटादेः साध्यतावच्छेदककालिकसम्बन्धेनाधिकरणत्वात् इति वाच्यम्, तादृशाभावपदेन महाकालान्यत्वविशिष्टघटाभावस्य ग्राह्यत्वात्, महाकाले केवलघटादेरसत्त्वेपि महाकालभेदस्यासत्त्वेन महाकालभेदविशिष्ट घटत्वावच्छिन्नानधिकरणत्वस्याक्षततया नाव्याप्तिः॥

घटत्वाऽत्यताऽभाववान् द्रव्यत्वादित्यत्र लघुधर्मस्य घटत्वस्य घटाऽन्योऽन्याऽभाव प्रतियोगितावच्छेदकत्वसम्भवेन कम्बुग्रीवादेर्हेतुसमानाधिकरणाभाव प्रतियोगितावच्छेदकत्वेनातिव्याप्तिरिति वाच्यम्, अत्र प्रतियोगितावच्छेदकत्वं न स्वरूपसम्बन्धरूपम्, किन्तुत्वनतिरिक्तवृत्तित्वरूपं तन्निवेश्यते, तथाच तादृशप्रतियोगितानतिरिक्तवृत्तित्वेन साध्यतावच्छेदकस्य तद्भिन्नत्वाभावेन नातिव्याप्तिः। ननु वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तिः, हेतुसमानाधिकरणाभावीयधूमत्वावच्छिन्नप्रतियोगित्वाभाववद्वह्निवृत्तित्वात्साध्यतावच्छेदकोभयत्वस्येति वाच्यम्, स्वानतिरिक्तवृत्तित्वसम्बन्धेन तादृशप्रतियोगिताविशिष्टान्यत्वस्यसाध्यतावच्छेदके विवक्षणीयत्वात्, तादृशोभयत्वावच्छिन्नप्रतियोगिताविशिष्टत्वस्यैव साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिः॥

श्रीमत्त्रिलिङ्गदेशविराजमानगुंटूरुमण्डलान्तर्वर्तिकृष्णातटिनीसमीपवर्तिविमूरुग्रामवास्तव्येन श्रीन्यायवेदान्ततन्त्रसमुपलब्धनिरवधिक प्रज्ञाविशेषवेमूरुपनामक श्रीरामब्रह्मसुधीन्द्रगुरुवरपङ्कजसेवासमधिगतशास्त्रविज्ञानेन गुंटूरुमण्डलान्तर्वर्ति श्री तेनालि संस्कृतकलाशालायां तर्कलिङ्कारशास्त्राध्यापकेनकुरुगंटुउपनामकश्रीसूर्यनारायणशास्त्रिद्वितीयतनूभवेन तर्कसङ्ग्रहसर्वस्वकृता श्रीरामशास्त्रिणा विरचिते श्रीमथुरानाथीयपञ्चलक्षणीव्याख्यानरूपे पञ्चलक्षणीसर्वस्वे

सिद्धान्तलक्षणं समाप्तम् ॥

॥ सर्वं श्री परमेश्वरार्पणमस्तु ॥